॥ श्रीः ॥

॥ श्रीमच्छङ्करभगवत्पादेभ्यो नमः ॥

# ॥ द्रविडात्रेयदर्शनम् ॥

शास्त्ररत्नाकर-पोलहम्-सु. श्रीरामशास्त्रिणा
प्रणीतम्-प्रकाशितञ्च ।

गोश्रीमहाराजानां दर्शनकलानिधीनां परीक्षिदपराभिधानश्रीयुतरामवर्मणां
अभिनन्दनसमुज्वलम्

ग्रन्थप्रकाशस्थानम्

पोलहम् सु. श्रीरामशास्त्री

संस्कृत कालेज,

मैलापूर : : मद्रास.

1957 [मूल्यम् रू. 2

SRI

# DRAVIDĀTREYA DARŚANAM

BY

**Sāstraratnākara Polaham Sri RĀMA S'ASTRI**

*With the opinion of*

**His Highness PARIKSHIT RAMAVARMA,**
**Maharaja of Cochin.**

*Published by*

POLAHAM RAMA SASTRI
SANSKRIT COLLEGE,
MYLAPORE : : MADRAS.

1957

[ Price Rs. 2

॥ श्रीः ॥

THE MAHARAJA
OF
COCHIN.

Hill Palace
TRIPUNITURA
30-12-'56.

मुद्रा

श्रीभगवत्पादभक्तशिरोमणिभिः पोलकं—सु. श्रीरामशास्त्रिभिः प्रणीतं द्रविडात्रेयदर्शनमत्यन्तं मामानन्दयति। द्वैतविशिष्टाद्वैतादिषु गहनेषु नयेषु शास्त्रिमहाशयानामसाधारणं प्रावीण्यं प्रकाशयन्नयं ग्रन्थः तेषां शास्त्ररत्नाकराभिधाया अन्वर्थतां सुतरां प्रख्यापयति। प्राचीनेषु नवीनेषु च निरवधिकनिबन्धनेषु सर्वङ्कषः शास्त्रिमहाभागानां परिचयः कस्य वा न कुर्यादाश्चर्यम्। ईदृशं शास्त्रपाण्डित्यं ग्रन्थपरिचयश्च येन तैस्समासादि, तत्तेषां परिश्रमस्थैर्यं मुक्तकण्ठां श्लाघामर्हत्येव।

श्रीमद्रामानुज-सुदर्शन-वेङ्कटनाथादिभिः प्रामाणिकैर्बोधायनमुनिकृतत्वेनाभिहितां स्वमतोपष्टंभकतया आश्रिताञ्च ब्रह्मसूत्रवृत्तिं गगनकुसुमेन शशशृंगेण च समानामिहासकृद्ब्रुवाणैर्महदाचरितं साहसमिति केचिन्मन्येरंन्। परन्तु प्राचीनग्रन्थगवेषणबद्धश्रद्धानां विमर्शनकुशलानां कुतूहलोत्तेजनेन अनर्घस्स ग्रन्थविशेषः प्रकाशपदवीमासादयत्वित्येव वचनभंगीमिमामूरीकुर्वतां शास्त्रिमहाशयानामाशय इति मे प्रतिभाति।

भूयोपि रत्नाकरादस्मादुदयं प्रपद्यन्तामीदृशान्यनर्घाणि ग्रन्थरत्नानीति प्रकाममभिलषन्नस्य भूयान् प्रचारो भूयादिति सर्वेश्वरं प्रार्थयते विदुषां विधेयः—

रामवर्मा
परीक्षित्।

॥ श्रीः ॥

॥ श्रीशिवश्शरणम् ॥

ब्रह्मनन्दी, द्रविडाचार्यः, आचार्यसुन्दरपाण्ड्यः, उपवर्षः, कृतकोटिः इति, बोधायनः, श्रीवत्साङ्कः, श्रीवत्साङ्कमिश्रः, इति चैवमादयः अतिप्राचीनाः आचार्यवर्याः अद्वैतग्रन्थेषु विशिष्टाद्वैतग्रन्थेषु च सममेव वेदान्तग्रन्थकर्तृत्वेन श्रूयन्ते। तेषु केचित् विशिष्टाद्वैतग्रन्थेष्वेव श्रूयन्ते। तैर्विरचिताः ग्रन्थास्तु नोपलभ्यन्ते इदानीम्। केचन प्राचीनानामपि नोपलब्धा इति तद्ग्रन्थादेवावगच्छामः, सर्वमिदं द्रविडात्रेयदर्शनेऽस्मिन् व्यक्तम्।

तत्तद्ग्रन्थेभ्यः कानिचिद्वाक्यानि शांकररामानुजीयभाष्यद्वयेऽप्युद्धृतानि टीकासंवादात् पश्यामः। एतानि वाक्यानि दृष्ट्वैव तेषां मतं कीदृशमिति विवेक्तव्ये विमर्शसरण्यामभियुक्तैः अस्मत्प्रियमित्रैः पोलकम्—श्रीरामशास्त्रिभिः कृतं इदं ग्रन्थरत्नं संशयक्लिष्टचेतसां जिज्ञासूनां महते उपकाराय भवति।

यदि केचन श्रीरामशास्त्रिकृतां प्राचीनाचार्यवाक्यानां एकवाक्यतासरणिं नाङ्गीकुर्युः, का नो हानिः? यस्मात् तैरेव एकवाक्यता विधान्तरेण प्रदर्शनीया भवति। मतद्वयग्रन्थस्थानि सर्वाण्यपि वाक्यानि उद्धृत्य एकवाक्यताकरणे अद्यावधि न केऽपि प्रायतिषत इति इदंप्रथमोऽयं वैशद्यप्रकार इति शास्त्रिभिरेव पीतं महद्यशः।

सर्वथा अयं ग्रन्थः सर्वोपकारी अद्वैतिभिः विशिष्टाद्वैतिभिश्च सममेव विलोकनीय इत्यत्र न कापि संशीतिः। विवादपदेषु विषयेषु उत्तरोत्तरं संभावितान् वादान् अव्यामोहेन प्रतिवक्तुं धैर्यं च प्रसादं च तेभ्यो देयात् महेश्वर इति भगवन्तं तमेव प्रार्थयते—

पण्डितराजः S. सुब्रह्मण्यशास्त्री
संस्कृतविभागः मद्रपुरी सर्वकलाशाला.

7—1—57.

॥ श्रीः ॥

# ॥ अद्वैतमतावलंबिमहाजनेभ्यः काचिद्विज्ञापना ॥

औपनिषदानाद्यद्वैतमतव्यतिरिक्तेषु प्रायशः सर्वेष्वपि मतेषु वस्तुतः प्रमाणप्रमेयबलयोरविद्यमानत्वेऽपि, प्रमातृबलं पुष्कलमनुभूयते। तथा हि—तन्मतावलंबिनां पण्डितानां प्रभूणां गुरूणां वा स्वीयमते अतितरां दृढोऽभिनिवेशः, अनितरसाधारणोऽभिमानः, तन्मतावलंबिनां सामान्यजनानामपि स्वीयमतसंबन्धिप्रमेयविशेषस्य सामान्यतोऽपि वा परिज्ञानं, स्वीयाचार्येषु भक्त्यतिशयः, स्वीयमतस्य प्रचारणविषये तीव्रश्रद्धा, स्वीयानामसाधारणमाराधनं, परमतावलंबिषु परमा अवज्ञा, परस्परमैकमत्यं, स्वीयमतप्रचारणार्थं प्रभ्वादीनां मुक्तहस्तता, तदर्थं विशेषतो द्रव्यव्ययः, इत्यादिः स्वीयमताभिवृद्धिप्रकारः प्रत्यक्षं दरीदृश्यते।

अद्वैतमते तु तद्वैपरीत्येन वस्तुतो विद्यमानेन प्रमाणप्रमेययोर्बलेनैव तस्य आसेतुहिमाचलं प्रचयगमनमनुभूयते। न तु परकीयमतेष्विव पुष्कलं प्रमातृबलं विलोक्यते। तथा हि—अद्वैतमतावलंबिनां पण्डितानां प्रभ्वादीनां वा स्वीयमते न दृढोऽभिनिवेशः, न वा बलवानभिमानः, अद्वैतमतावलंबिनां सामान्यजनानां अद्वैतमतसंबन्धिप्रमेयविशेषस्य सामान्यतोऽप्यनवबोधः, अन्ततः स्वयमद्वैतिन इत्यपि स्वस्वरूपापरिज्ञानं, स्वीयाचार्येषु तीव्रभक्त्यभावः, स्वमतस्य प्रचारणविषये श्रद्धाभावः, परस्परमैकमत्याभावः, स्वमताभिज्ञपण्डितानादरः, स्वीयाराधनाभावः, अद्वैतमतावलंबिनां प्रभ्वादीनां मुक्तहस्तत्वाभावः, अद्वैतमतप्रचारणार्थं काचकणस्याप्यव्ययः, इत्यादिः मतह्रासप्रकारः विशेषतो दरीदृश्यते। परेषामिव मतान्तरस्थेषु अवज्ञाऽभावः परं अद्वैतिनां गुणः श्लाघास्पदम्।

हन्त ईदृश्यां परिस्थितौ सत्यां असाधारण्येन अखिललोकक्षेमनिदानपरमशान्तिबोधकाद्वैतमतप्रचारणविषये भगवान् रमारमणः उमारमण एव च शरणम्। तस्मात् अस्मिन् विषये कर्तव्यमालोचयत, अवधत्त, जाग्रत, मा स्वपत॥

पोलहम्-सु. श्रीरामशास्त्री

SRI

**Obiesance to Sri Sankara Bhagavatpāda**

## INTRODUCTION

### Ātreya Brahmanandi and Dravidāchārya.

1. These two personages who are among the early expounders of the pure Advaitic tradition were born in the beginning of this yuga. Sri Rāmānuja and others proclaim them as the originators and teachers of their own Visishtādvaita siddhānta.

2. Of these two, Sri Brahmandi wrote a precious work called *Vākya* in sūtra form and it was an exposition of the purport of *Chāndogyopanishad.* Dravidāchārya embellished that work by the supeiror gold of his *Bhāshya* on it. Thus came about a bright diamond set in gold. On account of this, these authors came to be known as *Vākyakāra* and as *Bhāshyakarā* respectively.

3. In the Chāndogyopanishad, from the first to the fifth adhyāya the following topics are expounded for the benefit of persons of inferior and not-so-inferior qualifications : three kinds of upāsanas namely, 'Angāvabaddhopāsana' which leads to the fruits of karma, 'Svatantrapratīkopāsana' which bestows material welfare, and 'Ahangrahopāsana' which leads to 'krama mukti.' In the sixth, seventh and eighth adhyāyās are expounded in order 'Sadvidyā' 'Bhūma Vidyā' and 'Prājāpatya Vidyā'. These have their fruition in 'Sadyomukti' or immediate release. These relate to the realisation of Nirguna Brahman which is Sacchidānanda and are expounded for persons of supeiror qualification. In the eighth adhyāya, for the benefit of persons of intermediate qualification, Dahara Vidyā which relates to Saguna Brahman is explained again. Thus two kinds of Brahman are treated of in the Chāndogyopanishad, the qualified Brahman to be worshipped and the qualitiless Brahman which is only to be known and realised.

4. In his Vākyagrantha which is an exposition of the Chāndogyopanishad, in accord with the Upanishad, Sri Brahmanandi too clearly brings out the two-fold character of Brahman. Dravidāchārya also in his 'Bhāshya' to the 'Vākya', very clearly expounds the two-fold Brahman and his exposition is in line with the Upanishad and the 'Vākya'. Unfortunately, these two works are not available.

5. However, thirty statements of the 'Vākya' and twenty of the 'Bhāshya' are available having been quôted in their works by early writers. Of these, eight statements of Vākya grantha and nine of the Bhāshya are found quoted in Advaitic works. Twentytwo of 'Vākya grantha' and eleven of the 'Bhāshya' are quoted in the writings of Sri Rāmānuja and others. Thus from both the 'Vākya' and 'Bhāshya' we are now in possession of only fifty statements. They have been set forth in the body of the present work. For purpose of easy reference, they have been separately given in the Appendix. [135-140]*

6. Sri Sankara Bhagavatpāda and others have quoted in their advaitic works from the bhāshya of Drāvidāchārya in the context of the explanation of the 'Madhu Vidyā' and 'Samvarga Vidyā' found in the third and the fourth chapters of the Chāndogyopanishad. Sri Rāmānuja and others quote from the 'Vākya' and 'Bhāshya' passages in the context of the 'Antarāditya Vidyā' set forth in the first chapter of the Chāndogyopanishad.

7. Though Sri Sankara Bhagavatpāda has not identically quoted from the 'Vākya', yet in his exposition of the 'Antarāditya Vidyā' in his Chāndogya bhāshya, and in the Antastaddharmādhikarana' devoted to an examination of it in the Sūtrabhāshya, he has expressed the same ideas in similar language. Thus, we find that Sri Bhagavatpāda has given expression in his work to ideas similar in language to those in the 'Vākya' and the 'Bhāshya' and having the same meaning. Such parallel passages have been indicated in the course of the present work. They

* The numbers in square brackets are references to the pages in the body of the book in which the topic is treated at length.

have also been separately tabulated for purpose of comparison under the heads of 'Brahmanandi-Bhagavatpāda Vākya Sāmarasyam' and Drāvidāchārya-Bhagavatpāda Vākya Sāmarasyam.' [141-142]

8. The 'Vākya grantha' gives six meanings to the 'Antarāditya Vidyā' passage in the Chāndogyopanishad: *Tasya yatha kapyāsam pundarīkamevamakshinī*. In the Chāndogyopanishad Bhāshya Sri Bhagavatpāda gives the conventional (*rooḍhi*) meaning of the word *kapi*. In this work it has been shown that this interpretation is not affected by the criticisms made against it by others. Sri Rāmānuja and others adopt three other meanings of the word from an etymological (yaugika) point of view picking them from the 'Vākya grantha'. It has to be emphasised that all meanings, the conventional and the etymological are those stated in the 'Vākya' itself.

9. In his 'Vākya grantha', the 'Vākyakāra' observes that for the anugraha of the aspirants, the Lord's form which is resplendant (Jyotirmaya) is imperceivable by the sense of sight, but can be perceived only by those of pure mind who worship concentrating on the form of the sun (āditya mandala). This same meaning accepted by the Vākyakara is conveyed by Sri Bhagavatpāda in the exposition of the *antarāditya vidyā vivaraṇa* of the *antastaddharmādhikarana* and of the *Chāndogya upanishad.* The Vākyakāra says: *Syādrūpam kṛtakam anugrahārtham taccetasām aisvaryāt. Rūpam cha atīndriyam antahkarana pratyaksham tannirdesāt.* Dravidāchārya's bhāshya on this passage is: *añjasaiva Visvasṛjo rūpam tattu na chakshushā grāhyam manasā tvakaluṣeṇa sādhanāntaravatā grihyate.*

10. Sri Bhagavatpāda writes in the 'Antastaddharmādhikaraṇa': *Syātparameswarasyāpi icchāvasānmāyāmayam rūpam sādhakānugrahārtham.* In the Chāndogyabhāshya he says: *dṛśyate nivṛtta chakshurbhih samāhita chetobhih brahmacharyādi sādhanāpeksham.* 'It is seen by those whose eyes have been turned inward and whose minds are steadfast by reason of the practice of brahmacharya etc.' It is to be noted that corresponding to the expressions of the Vākya-

kāra: *taccetasāmanugrahārtham, ais'varyāt* and *kṛtakam,* Sri Bhagavatpāda uses *Sādhakānugrahārtham, māyāmayam* and *icchāvasāt.* Similarly where the Vākyakāra says *atīndriyamantahkaraṇa-pratyaksham,* the Bhāshyakāra explains it as *na chakshushā grāhyam manasā tvakaluṣeṇa sādhanāntaravatā grihyate* and Sri Bhagavatpāda's expressions for them are respectively *dṛsyate nivṛtta chakshurbhih, samāhitachetobhih* and *brahmacharyādisādhanāpekṣam.*

11. Thus while the expressions in the Vākya, the Bhāshya and Sri Bhagavatpāda's explanations are in accord, not disposed to agree to this, Sri Rāmānuja and others have altered the words *rūpam chātīndriyam* into *rūpam vā atīndriyam.* They also maintain that the statement *syād rūpam* is the *pūrvapaksha* and that *rūpam vā atīndriyam* contains the siddhanta. They also say that the form of the Lord is not unreally assumed by Him, but that it is His real nature. The Vākyakāra says in the previous sentence that it is 'assumed' for purpose of 'anugraha' and he follows it in the succeeding sentence that that form is supersensuous, but perceivable in the antahkaraṇa. There is nothing irreconcilable in the Lord's form being the result of an assumption and also supersensuous and congnisable by the pure mind. Where is the distinction of pūrvapaksha and siddhānta between two positions which are not contradictory to each other? Dispassionate consideration will show that this has not been taken into account in a partisan view of this matter. That the Lord's form is eternal has nowhere been stated in the 'Vākya'. All this has been clearly brought out in the present work. [42-48]

12. In his bhāshya, Dravidāchārya says that Bhagavad rūpam, the Lord's form is *yatthābhūtam,* that it is existent, and goes on to observe that form is not spoken of a devata which is formless; for s'āstra speaks only of what is. It is *Yatthābhūtavādi.* It informs us of what has *sattā.* True, there is no insturction of *rūpa* in respect of what is *arūpa,* formless. The meditation on the form of the Lord is not based on *adhyāsa* or supposition as in the meditation of mind as Brahman (mano Brahma) etc., but it is the meditation of the existing rūpa. Sri Bhagavatpāda too following the same text speaks in the same manner. This is what he says:

There is no non-validity in respect of the texts which refer to the subject of upāsana. Hence Sāstra which speaks of upāsana refers only to the actually existing ātma, Īsvara and devatā etc. While explaining the third brāhmana of the first adhyāya of the Brihadāranyakopanishad, he observes, 'As that which is indicated as Paramātmā, Īsvara and devatā is non-empirical, it deserves to be spoken of as actually existing'. Similarly in the bhāshya to the Sutra 'Svāpyayā sampatyoh' Sri Bhagavatpāda says: That where this Īsvara's nature is described, it refers to a different state like svarga etc., and it is the locus of the Saguna Vidyā'

13. The empirical reality of the Lord's form subsists till the direct realisation of Brahman. It is not transcendental (pāramārthika), non-sublatable in all the three periods of time like the qualitiless Brahman. This view is based on the passage *laukikam tadvadevedam pramānamtvātmanischayāt*, which is a quotation from Dravidāchārya at the end of the "Samanvayādhikaraṇa". Sri Rāmānuja and others maintain however that the Lord's form is pāramārthikam. They rely on the following passage in Bhāskara bhāshya: *Parameśwarasya sarvaśaktitvāt upāsakānugrahāya rupopādāna sambhavāt, kim māyāmayam rūpam? Neti brūmah, pāramārthikamevaitat. Yattha bhūtagñāpakam hi śāstram.*

Attracted by this view, they delude themselves into believing that the same may be the view of the Vākyakāra and the Bhāshyakara.

14. But that is not correct. Even as the Vakyakāra upholds the theory of Vyāvahārika, so does the Bhāshyakara too. In the context of the explanation of the *Sadvidyā*, taking up the Śruti *vāchārambhanam vikāro nāmadheyam mṛttiketyeva satyam,* Vākyakāra discards the theory that a thing should be either *sat* or *asat* only and establishes on the basis of Śruti the theory of the Vyāvahārika Satya of the world which is neither exclusively sat or asat. *na samvyavahāramātratvāt.* This conclusion of the Vākyakāra is clearly explained in the 'Sankshepa 'Śārīaka', in the commentaries on it and in the 'Kalpataru'. This has been set forth in the present work. It is pertinent to ask those who proclaim that they are followers of the position of the Vākyakāra why they have rejected

the statements establishing the Vyāvahārikatva of the world and quoted in the 'Kalpataru' and the 'Sankshēpa Sārīraka'. [13-33].

15. While explaining the 'Sadvidyā' the Vākyakāra says *yuktam tadgunakopāsanāt*. He considers that *antargunaka brahma-prāpti* is a proper consequence of *antargunakabrahmopāsanā*.

The Bhāshyakāra too explains this passage as follows. *antar-gunām pratyakgunāmeva bhagavatīm paradevatām bhajata iti tatra tadguṇaiva devatā prāpyate*. Here the word *tadgunakam* in the vakya is explained as *antarguṇa*. In accordance with the indication of the Bhāshya contained in the words *svapadāni cha varṇyante*, the expression *antarguṇa* in the bhāshya is explained as the *Pratya-gātman*. *Antah* (inner) is a correlate of *bahih* (outer) i.e., inner as opposed to outer. The word *guna* applies to *svarūpa*. So we get the equation. *tadgunakopāsanāt* = *antargunakopāsanāt* = *pratyakg-rūpabrahmopāsanāt*. By the 'tatkratu nyāya' it is proper to say *tadgunaiva*=*antargunaiva*=*pratyaksvarūpaiva*, by this *pratyaksvarūpa* the *para devatā*, the supreme deity which is *para brahma rūpa* is attained. This reasoned conclusion of the Vākya and the Bhāshyakāras is established beyond doubt. That the consciousness of the non-difference of the *pratyagātman* and *Brahman* arises from the knowledge of the identity of the two which is the purport of the mahāvākya *Tattvamasi* is expounded by both of them.

The same is explained by Sri Bhagavatpāda in his comment-ary on the Chāndogyopanishad. That this is the view of the bhāshya of Dravidāchārya is clearly stated in the 'Saṅkshepa Sārīraka' also. This has been shown in the present work. [32]

16. Not able to agree to this, Sri Rāmānuja and others give a different explanation. They say: Though *antarguna devatā* indicates impossibility of worship separately, in effect it means the devata qualified by attributes like 'satyakāma' etc which are internally existing *antarvidyamāna satyakāmatvādigunavisiṣṭa devatā*). So as in 'Dahara vidyā' etc., in the 'Sadvidyā' too the saguna devatā alone is to be worshipped and that which is to be attained is 'saguṇa' only. Modifying the Dravidābhāshya text

they say: *antargunāmeva devatām bhajata iti tatrāpi saguṇaiva devatā prāpyate*. They overlook the explanation of *antarguna* as *pratyak-guna* quoted in the 'Saṇkshepa Sāriraka'. They have altered the word *tadgunaiva* in the text into *Sagunaiva*. The word *api* (also) which serves to include the saguna vidyās like the Dahara Vidyā etc., has been included. Thus the text of Dravidāchārya has been mutilated by interpolation, removal and modification made in it. Dravidāchārya juxtaposes the words *antarguna* and *tadguna* to show that they are synonymous. By the worship of that which is *antargunā*, on the basis of *tatkratunyaya*, *tadguna* which is *antarguna* is attained, and so by the upāsanā of *tadgunaka* ensues the attainment of *tadgunaka*. This teaching of the Vākyakāra is firmly established by the Bhāshyakāra. To the question what is this *guna* referred to in the vākya expression *tadgunakam*, he explains that what is spoken of as *antah*, is *pratyak*. Others however do not answer this question. They only speak of its internal existence. That their contention is inconsistent will be patent to dispassionate scrutiny. This too has been set at length in the present work. [35-40].

17. Explaining the mahāvākya, *Tattvamasi*, the Vākyakāra puts it in the form of the Sūtra: *Siddhantu nivartakatvāt*. The Bhāshyakāra explains it thus: A prince brought up among hunters thinks that he is a hunter. But when he is told on the basis of proper reasons that he is a prince, he realises his true nature. Even so the Jīva thinks that he is a samsārī. But when a Guru tells him of his Brahmabhāva of which he was ignorant so long, he realises his true nature upon the removal of that nescience. Thus is established the validity of the declaration *Tattvamasi*. The Vākya is not to be understood as illumining what was not luminous itself. For Brahman is self-effulgent as ātman. It is luminosity itself. No other light can illumine what is already luminous. Thus this elucidation of Dravidāchārya in the form of the story is found in all advaitic works. But this well-known meaning is concealed by others as it contradicts their own Siddhānta.

18. By the *vākya* : *Ātmetyeva tu gṛhṇīyāt* the Vākyakāra declares that the non-difference of the Paramātman from the Jīva is to be

meditated upon. But those that say that the meditation should be from the attitude of S'arira and Śarīri only distort the meaning of the text.

19. The statements in the *Vākya* and in the *Bhāshya* that are quoted by Sri Rāmānuja and others as speaking of Saguna Brahman are favourable to the Advaitins who affirm the saguna aspect of Brahman. They are not unfavourable to them. But the *Vākya* and the *Bhashya* statements referring to Nirguna Brahman are unfavourable to Sri Rāmānuja and others who do not accept a Nirguna Brahman. That is why they have not quoted them and have rejected them.

20. Editing the *Vedāntasāra* of Sri Rāmānuja, certain fanatics have interpolated the words *na vā māyāmātram* before *anjasaiva Visvasṛjo rūpam* in Drvidāchārya's work. But these interpolated words are not found in Sri Rāmānuja's *Vedārthasaṅgraha* where too the identical words of Dravidāchārya are quoted. In the Tatvatīka too, the quotation begins with *anjasaiva*, but the words *na vā māyāmātram* are not stated. It has been shown in the present work that such interpolations have been indulged in only to prove that Dravidāchārya does not support the Advaitic view. [88-90].

21. The authors of the S'rutaprakās'ikā and of Tatvatīka attribute the invocation *namah pravaraguṇaikāspadāya* to the Dravidāchārya bhāshya. But, as a matter of fact, it is found at the commencement of the Mīmāmsānyāyakosa, a work which exists in the Madras Oriental Manuscripts Library. From this it will be clear that neither Sudarśana nor Venkatanātha, the authors referred to above have even seen the Vākya of Brahmanandi and the Bhāshya of Dravidāchārya. [71]

22. The truth is that the Vākyagrantha and the Bhāshyagrantha expound the established view of advaita by their exposition of Chāndogyopanishad. But Sri Rāmānuja and others proclaim that these two works which are summaries of the elaborate *vṛtti* of Bodhāyana are expositions of the Visiṣṭādvaita sampradāya. We marvel at their ingenuity. There is no proof

that Brahmanandi wrote any other work than the Vākyagrantha which is explanatory of the Chāndogyopanishad or that Dravidāchārya wrote any other work than his bhāsya on the Vākyagrantha. But some moderns say that, apart from the Brahma Sūtra, there is another work by them and that it supports the Visiṣṭādvaita Siddhanta. But it is the opinion of scholars that such a work has only the reality of a sky flower. Even if it should exist and be brought to light, there is no doubt that like these explanatory works on Chāndogya, it too will lend support to Advaita only and that the wishful thinking of those who claim it exists will not be realised.

23. Yāmuna does not say in his works that Maharshi Bodhāyana is the author of a Vrtti on the Brahma Sūtras and that he is the originator of his sampradāya. It is his followers, Sri Rāmānuja and others who say it. The progenitor Yāmuna spoke of a 'Dravidabhāshyakāra' as the grand expounder of the Brahmasūtras and of 'Srivatsānkamisra' as a great commentator and as an expounder of Nyāya. But he spoke of Brahmanandi otherwise known as 'Tankā' as belonging to a different school and so unacceptable. 'Drāvidabhāshyakāra' spoken of by Yāmuna superficially appears to be the same as Dravidāchārya due to the similarity of name. But we have shown in the pages of this book that he is none other than Sri Satakopa (Nammālwar) who sang the hymns in Tamil (Tiruvāimozhi) and who has been extolled by Yāmuna in his 'Stotraratna'. [117-119] Hence it is that instead of saying 'written by Dravidāchārya, Yāmuna says in his 'Ātma siddhi' 'Dramidā bhāshya kṛta'. Dramida should ordinary be referred as Dramida himself. But to refer to him as 'the author of the bhāshya written by Dramida' is like getting round the head to touch the nose. But speaking of Satakopa, it is right to refer to him as the author of the bhashya written in Dramida language.

24. Satakopa wrote the Drāvidaprabandhas on his own, not as a commentary or exposition of the Brahmasūtras. This is a well-known fact. Yet exalting the Drāvida prabandham to the position of a bhāshya and as an epitome of the meaning of the Brahmasūtras, he was the first to establish his thesis of the con-

cordance of Sanskrit and Dravida (Tamil) works, (Ubhaya Vedānta). In keeping with it, is the proud appellation of 'Ubhaya Vedanti'. In this work, it has also be shown with reasons that Srivatsānkamisra spoken of as the author of the Dramidabhāshya Vivarana' is really Nāthamuni, grandfather of Yāmuna who was the pupil of Satakopa, the originator of Visishtādvaita sampradāya. In Yāmuna's work, some persons have substituted 'Srivatsānka' for 'Sriranganātha'.

25. In Srivatsānka Misra's vṛtti, the fallibility of Pāncharātra has been clearly proved. But Yāmuna begins his exposition of the 'Pāncharātrādhikarana' with affirming the infallibility of Pāncharātra. This is clearly seen in Yāmuna's work dealing with Āgama pramāṇa. That the fallibility of Pāncharātra is proved in all earlier works is stated by Purushothama in his 'Vallabhabhāshya prakāsa'. Bhāskarachārya too has exhibited the falliility of Pāncharātra in his bhāshya. Though he proposed to explain the Vākya and the Bhāshya granthas, Bhāskara does not quote from Bodhāyana vṛtti. All this will be clear from the following pages. Hence, it is seen that to give it a hoary ancestry, Sri Rāmānuja and others have begun with positing a 'Bodhāyana vṛtti', From the observation of Sudarśana and Vēṅkatanātha that Bodhayanavṛtti has its fruition with reference to the devās only, it is implied that the work is non-existent in bhūloka. [27]

26. Further, Visishtādvaitins quote only seven sentences from the Bodhāyanavṛtti. There is no other quotation. It is to be wondered why Sri Rāmānuja and others have not more abundantly quoted from this work seeing that they loudly proclaim that it is the supreme authority for their Siddhānta. This leads one to suspect if the work exists at all. Even the seven sentences quoted do not show any contradiction with the Advaita view. In some places there is a different interpretation. That too has been brought out in this book 'Dravida Ātreya darsana'. [93]

27. There is reference to Śrikanthācharya in Yāmuna's work. By substitution of the word 'Srīvatsānka' in the place of Srīkantha, the latter's name has been eclipsed. Srikantha referred to in Bhāskara bhāshya is anterior to Sri Rāmānuja and others. By

following the Visishtādvāitamata of Srīkantha, Sri Rāmānuja and others have made out that theirs is a new school. In their dislike of certain topics like the superiority of Siva, they have discarded Srīkantha's siddhānta also. Afraid that acknowledgement would lead to Srīkantha's bhāshya being considered as the source of their school, even the name is not mentioned by them.

28. By reason of their allegiance to Vaishnavism, the author of Vallabhabhāshya prakāsa and others have accused Srīkantha of having plagiarised from the system of Sri Rāmānuja. We have shown in this book that the contrary is the case. [29] That the original sources of Sri Rāmānuja's works are the Drāvida prabandhas which contain the purport which is derived from the Siddhi traya, Āgama prāmānya and other works of Yāmuna from which his pupils have learnt through their teachers, and not from Bodhāyana vṛtti etc. is made clear in this book from passages in Venkatanātha's works themselves. And thus it has been proved that 'Bodhāyana Vṛtti' is the name of a non-existent work. [27-28]

29. To establish the existence of Bodhāyanavṛtti, it is contended that Bodhāyana, Upavarsha and Krtakoti are the names of the same person. This has been effectively disproved in this book by a careful examination of the Tamil work *Maṇimekhalai*, of *Avantisundarī*, *Kāśikā* of Sucharita *Tatvatīka* and Prapañca hṛdaya [80-83,85] The tradition reported by Venkatanātha that Bodhāyana produced a Vṛtti of twenty topics, has also been disproved by us. [74]. The 'Rudrarodana' spoken of by S'urtis is pronounced by Mīmāmsakas as 'artthavāda'. Yet, Venkaṭanātha affirms that the 'rodana' was a fact. This has to be traced to his 'devatādvēsha', animus to Siva. [6]

30. Bodhāyana Maharshi is the author of Dharma, Grhya, Srauta Sutras and Smritis. He saw no difference between Siva and Vishnu (Mahādeva and Mahāpurusha). He enunciated common forms of worship for both. He was a great Sivabhakta who ordained the smearing the body with vibhūti, the manner of obtaining, it, the drinking of the 'pādodaka' of Mahadeva Īs'ānabali etc. By no means can he be said to be the progenitor of Visishtādvaita Sampradāya. This has been made clear in the

following pages. [81] And, it has also been shown that there is no evidence of another Bodhāyana to whom the Visiṣṭādvaita Sampradāya could be traced. [98]

31. As an appendix to his Karmamimamsā, Jaimini has added a 'Sankarsha kānda'. This has been referred to by Sabaraswāmi and others and in the Advaitic and Visiṣṭādvaitic works. But Venkaṭanātha and others speak of another 'Sankarshakāṇda' said to have been written by a Kāsakṛtsna. It is claimed that it teaches that Vishnu is Parabrahman in accord with the instructions of Parāsarabhatta, Venkaṭanātha, Srinivāsāchārya and others, that it intimates that the word Brahman in the first Sūtra of the Brahma Sūtras refers to Vishnu as the alleged Sankarshakāṇda is said to close with the words *ante harau taddarśanāt sa Vishnurāha hi*; *tam Brahmetyāchakshatē*, *tam Brahmetyāchakshatē*, thus equating the words Vishnu and Brahman on this supposed authority. In the following pages we have clearly shown that this claim should share the same fate as that made for the existence of the Bodhayana Vṛtti* [100-109]

32. It is worthy of note that those who are thus devoted to the vṛttis of Rishīs deny such sanctity to *Upavarsha Vṛtti* which also has been written by an eminent sage. [110-111] The alleged 'Bodhāyana vṛtti' is only a creation of the opponents of Advaita and is modelled on the work of Bhāskara and reveals a number of expressions actual or disguised taken from Bhāskara [120]. We have shown in the body of the book that not only does Venkaṭanātha himself accept the charge of novelty in respect of Visiṣṭādvaitamata, but does not trace it to Bodhāyana [123]

33. We have also shown that Sudarśana himself does not, in his heart of hearts, acknowledge the indebtedness of his sampradāya to Vākyakara and Bhāshykara. [124] Sri Bhagavatpāda quotes three slokas from Abhinava Drāvidāchārya at the end of

*In line with the supposed existence of Bodhāyana Vrtti by the Visishtādvaitins is the 'Srikarabhāshya', a Veera Saiva work attacking Advaita written by one Sripati Panditāchārya on the authority of an 'Agastya Vrtti' of the existence of which too there is no evidence. Vide No. 20 of *Siva granthamāla* published by Saiva Bhāratī Bhavan of Jangamavaḍi Math, Kāsi.

his commentary on the Samanvayādhikaraṇa. From this too, it is clear that Dravidāchārya was the expounder of Advaita Sampradāya. For the Abhinava Drāvidācharya who was an Advaitin would not have called himself by that name were not Prāchina Dravidāchārya also an Advaitin. [90–92]

34. The fact that Advaiti Sannyāsis specially worship Dravidāchārya at the time of Vyāsapūja, proves his association with the propagation of the Advaita Sampradāya, [125]

35. And so, it is concluded with the prayer that every one may derive benefit according to his capacity by the study of the Advaita darsana which is the central teaching of the Upanishad, proclaimed in the 'Jnānavāsiṣṭha' by the great sage Vasiṣṭha,* enunciated by Bādarāyaṇāchārya in his Brahma Sūtras, clearly explained by Vṛttikāras like Upavarha, made definite by Gaudapādachārya in his Kārika on the Māndūkyopanishad, established by Sri S'ankara Bhagavatpāda who stands for the pure Advaita sampradāya in his bhāshyas etc., annotated on in their Tika, Vārtika etc by Achāryās like Padmapāda and Sureswara, by the authors 'of Sankshepa S'āriraka' and 'Vivaraṇa' and by Vāchaspati Miśra, expounded in simple language by Sri Vidyāraṇya and which has been transmitted through a holy and beginningless tradition and which dowers its votaries with supreme joy and eternal peace.

36. Certain persons unable to endure the Advaita darśana which is the crown of all dars'anas and popularised by the pure-hearted Bhagavatpāda of transcendental wisdom, have written unkindly saying that a rishi alone can understand a 'rishi's view and not one who is dull-witted (*jaḍamatih*) meaning that Sri Sankara Bhagavatpāda who is such a dull-wit, is incompetent to comprehend the words of Vyāsa, but that Bodhāyāna alone who is a *riṣi* can understand them. Hurt and grieved by this and such other statements which have pained many others like me, I started

---

*Sri Bhagavatpāda explaining the Gita passage, *tadetad rishibhir bahudhā gitam* says *rishibhih* refers to Vasiṣṭādibhih. Others explain it as *Parāsarādibhih*.

on enquiries like: What is the truth? Who has really understood the view of the Maharişi? Who are those who have propounded it rightly? And I came to certain definite conclusions on these questions by the grace of Sri Bhagavatpāda and became steadfast in my allegiance to his Siddhānta.

37. His Holiness Sri Jagadguru Sri Kanchi Kamakoṭi Peeṭhādhipati, Paramahamsaparivrājakāchārya Sri Chandrasekharendra Saraswati Sricharanāh is a re-incarnation of Sri Sankara Bhagavatpāda. He has established Karmayoga by instrucing his countless disciples throughout the country in the way of righteous life. By initiating the *Tiruppāvai-Tiruvembāvai* movement, he has brought about concord among the various communities, abolished from the minds of people the sense of distinction between Siva and Vishnu and thus filled their hearts with true devotion showing them the pure Bhaktiyoga. He is supremely intent on propagating the Jnāna yoga through the medium of the Advaita Sabha. Overflowing with compassion, day and night, his one unceasing thought is the welfare, material and spiritual, of all men of the world. Justly renowed for his intense austerities and supreme tapas, continuously living in the climate of advaitānubhava, his is a personality most excellent and auspicious and his very look is a benediction purifying and inspiring those on whom it falls. His Holiness was graciously pleased to command that I should make a discourse on Sri Dravidāchārya on the occasion of the Diamond Jubilee of the Advaita Sabhā. Receiving that command in all humility, I began to do research respecting the references to Dravidāchārya in all available sources.

38. Carefully examining all works of Advaitic and Visishtādvaitic schools, I discovered that Dravidāchārya is really one who established Advaita. After the manner of Dravidāchārya's story of the prince brought up as a hunter, he has been alleged to be the teacher of Visishtādvaitic sampradāya. Surprised by my discovery of the truth, I pursued my researches further and that led to another discovery that Brahmanandi too, the author of the original for which Dravidāchārya wrote his bhāshya though differently claimed, is also an exponent of Advaita. I also

discovered that 'Bodhāyanavṛtti' which is advanced as the source of the writings of these two personages possessed only the reality of a sky-flower. I was also convinced that the teachings of Maharshi Vyāsa could be comprehended only by Bodhāyana Maharshi who is an Advaiti *par excellence* and a great Sivabhakta. But, I also discovered that this Bodhāyana Maharshi is not the author of the alleged Brahmasūtravṛtti. Agreeably to the declaration that 'Vishnu is the heart of Siva and Siva is the heart of Vishnu,' I was convinced that the teaching of Sri Vyāsa who is an incarnation of Vishnu can be understood only by Sri Bhagavatpāda who is an incarnation of Siva and not by others.

39. This truth has all this time been concealed by the loud propaganda of other schools. After a careful study of all available literature on this subject, I have brought to light my conclusions on it with the sole purpose to reveal the truth and to save people from being misguided by interested partisans. I wish to submit very humbly that in writing these pages I have not been actuated by any animosity against any person or class of people. My prayer is that scholars may examine my findings dispassionately to be satisfied about their truth.*

Śāstraratnākara Polaham Śri Rāma Śāstri,
*Professor of Sāhityā and Vedānta,*
*Madras Samskrit College.*

**I am indebted to Prof. P. Sankaranarayanan. Professor of Philosophy, Vivekananda College, Madras for rendering this Introduction into English.*

॥ श्रीः ॥

॥ श्रीमच्छङ्करभगवत्पादेभ्यो नमः ॥

# "भूमिका"

## "आत्रेयब्रह्मनन्दिनो द्रविडाचार्याश्च"

१. इमे हि विशुद्धस्य अद्वैतसंप्रदायस्य प्रवर्तकेषु पूर्वाचार्येषु अन्यतमाः एतद्युगारंभ एव संभूताः। एतान् स्वीयवैष्णवविशिष्टाद्वैतसंप्रदाय-प्रवर्तकपूर्वाचार्यत्वेन रामानुजादयो घुष्यन्ति।

२. तत्र ब्रम्हनन्दिनः छान्दोग्योपनिषदर्थविवरणात्मकं सूत्ररूप-वाक्यनिचयमण्डितं वाक्यनामकं ग्रन्थरत्नं प्राणैषुः। द्रविडाचार्यास्तु तद्वाक्य-ग्रन्थरत्नं विमलेन अत्युत्तमभाष्यकनकेन अभूषयन्। सोऽयं महार्घरत्न-काञ्चनयोगः। तेन चैतेषां क्रमेण निरुपपदमेव वाक्यकारा भाष्यकारा इति च जगत्यां प्रथा समजायत।

३. छान्दोग्योपनिषदि च आदित आरभ्य आपञ्चमाध्यायं कर्म-समृद्धिफलानि अङ्गावबद्धोपासनानि, अभ्युदयसाधनानि स्वतन्त्रप्रतीकोपास-नानि, क्रममुक्तिफलान्यहंग्रहोपासनानि, इति त्रिविधोपासनानि बहूनि मन्द-मध्यमाधिकारिणां कृते उपादिश्यन्त। षष्ठसप्तमाष्टमेषु अध्यायेषु क्रमेण सद्विद्या, भूमविद्या, प्राजापत्यविद्या, इति सद्योमुक्तिफलकं सच्चिदानन्दात्मकनिर्गुणपरमात्म-विद्यात्रिकं उत्तमाधिकारिणां कृते समुपदिष्टम्। अष्टमाध्याये सगुणा दहरविद्याऽपि मध्यमानां कृते पुनरुपदिष्टा। एवं च छान्दोग्योपनिषदि सविशेषमुपास्यं निर्विशेषं ज्ञेयमिति द्विरूपं ब्रह्म न्यरूपि।

४. तद्विवरणात्मके वाक्यग्रन्थेऽपि ब्रह्मनन्दिन आचार्याः उप-निषदनुसारेण द्विविधमपि ब्रह्म सम्यक् प्रत्यपादयन्। तद्भाष्येऽपि द्रविडाचार्याः

उपनिषद्वाक्योभयानुसारेण उभयविधमपि ब्रह्म स्पष्टं प्रकाशयामासुः। तावुभावपि वाक्यभाष्यग्रन्थौ इदानीं दैवदुर्विपाकात् अदृश्यतां गतौ।

५. तत्र वाक्यग्रन्थे त्रिंशद्वाक्यानि, भाष्यग्रन्थे विंशतिश्च पूर्वैरुदाहृतानि दैववशादिदानीमुपलभ्यन्ते। तत्र वाक्यग्रन्थे अष्टौ भाष्यग्रन्थे नव चाहत्य सप्तदश वाक्यानि अद्वैतग्रन्थेषु, वाक्यग्रन्थे द्वाविंशतिः भाष्यग्रन्थे एकादश चाहत्य त्रयस्त्रिंशद्वाक्यानि रामानुजादिग्रन्थेषु च उदाहारिषत। आहत्य वाक्यभाष्यग्रन्थद्वयेऽपि पञ्चाशद्वाक्यान्येव सांप्रतमुपलभ्यन्ते। तानि च वाक्यानि द्रविडात्रेयदर्शननिबन्धमध्ये अस्माभिर्निर्दिष्टानि। पाठकानामवगमसौकर्याय ग्रन्थाद्बहिरपि पृथक् प्रकाशितान्यस्मिन्नेव पुस्तके।

६. तत्र छान्दोग्योपनिषत्तृतीयचतुर्थाध्यायप्रतिपादितमधुविद्यासंवर्गविद्याविवरणस्थलीयं द्रविडाचार्यभाष्यवाक्यजातं अद्वैतग्रन्थेषु उदाहृतं भगवत्पादादिभिः। छान्दोग्यप्रथमाध्यायप्रतिपादितान्तरादित्यविद्याविवरणस्थलीयं वाक्यग्रन्थभाष्यग्रन्थवाक्यजातं रामानुजादिभिरुदाहृतम्।

७. भगवत्पादैः तत्स्थलीयवाक्यानामनुदाहरणेऽपि च, तत्स्थलीयवाक्यभाष्योभयग्रन्थवाक्यसमानच्छायानि वाक्यानि छान्दोग्यभाष्ये अन्तरादित्यविद्याविवरणस्थले, सूत्रभाष्ये तद्विचारपरे अन्तस्तद्धर्माधिकरणे च प्रयुक्तानि। अतः भगवत्पादैः वाक्यभाष्यग्रन्थद्वयप्रतिपाद्य एवार्थः स्वयं समानच्छायैर्वाक्यान्तरैरनूदितः इति ज्ञायते। तानि च समानच्छायानि वाक्यानि द्रविडात्रेयदर्शननिबन्धे अस्माभिः प्रदर्शितानि। पठितॄणामवगमसौकर्याय पार्थक्येन च ब्रह्मनन्दिभगवत्पादवाक्यसामरस्यम्, द्रविडाचार्यभगवत्पादवाक्यसामरस्यमिति विशिष्य प्रकाशितमस्मिन् पुस्तके।

८. छान्दोग्ये अन्तरादित्यविद्यागतं 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति यद्वाक्यं, तस्य षडर्थाः वाक्यग्रन्थे प्रतिपादिताः। तत्र कपिपदरूढ्यर्थावलंबी ऋजुर्निर्दिष्टश्च एकोऽर्थः भगवत्पादैः छान्दोग्यविवरणे प्रतिपादितः।

तत्र परैः प्रतिपादिता दोषा न भवन्तीति प्रतिपादितं निबन्धेऽस्मिन् । वाक्यग्रन्थ-प्रतिपादितेषु अर्थेषु कपिपदयौगिकार्थानुसारिणः क्लिष्टाश्च त्रयोऽर्थाः रामानुजादि-भिराहृताः । सर्वेऽप्यर्था वाक्योक्ता एव ।

९. आदित्यमण्डलान्तःसमाहितचेतोभिरुपासकैः विशुद्धेन मनसा केवलं ग्राह्यं चक्षुरग्राह्यं ज्योतिर्मयं भगवतो रूपं साधकानुग्रहार्थमैश्वर्यवशात् भगवता स्वीकृतं इति वाक्यग्रन्थे कथितं वाक्यकारैः । अयमेव वाक्यकाराभि-मतोऽर्थः भगवत्पादैरपि अन्तरादित्यविद्याविवरणपरे अन्तस्तद्धर्माधिकरणे छान्दोग्यविवरणे च कथ्यते । तथा हि वाक्यकारस्य वाक्यम्—'स्याद्रूपं कृतक-मनुग्रहार्थं तच्चेतसामैश्वर्यात् । रूपं चातीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशात्' इति । तत्रैव द्रविडाचार्यभाष्यम्—'अञ्जसैव विश्वसृजो रूपं तत्तु न चक्षुषा ग्राह्यं मनसा त्वकलुषेण साधनान्तरवता गृह्यते' इति ।

१०. भगवत्पादानामन्तस्तद्धर्माधिकरणे वाक्यम्—'स्यात् परमेश्वर-स्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्' इति । छान्दोग्यभाष्ये अन्तरादित्यविद्याविवरणस्थले वाक्यम्—'दृश्यते निवृत्तचक्षुर्भिः समाहित-चेतोभिः ब्रह्मचर्यादिसाधनापेक्षम्' इति । अत्र वाक्यकारवाक्यघटकानि 'तच्चेतसामनुग्रहार्थम्' 'ऐश्वर्यात्' 'कृतकम्' इति पदानि क्रमेण भगवत्पादैः 'साधकानुग्रहार्थम्' 'मायामयम्' 'इच्छावशात्' इति पदैर्विवृतानि । 'अतीन्द्रियमन्तःकरणप्रत्यक्षम्' इति वाक्यकारवचनं, 'न चक्षुषा ग्राह्यं मनसा त्वकलुषेण साधनान्तरवता गृह्यते' इति भाष्यकारवचनं च भगवत्पादैः 'दृश्यते निवृत्तचक्षुर्भिः समाहितचेतोभिः ब्रह्मचर्यादिसाधनापेक्षम्' इति वाक्येन विव्रियते ।

११. एवं वाक्यभाष्यभगवत्पादवाक्यानां सामरस्ये स्थितेऽपि, तद-सहमाना रामानुजादयः 'रूपं चातीन्द्रिय'मिति वाक्यकारवचसि 'रूपं वातीन्द्रिय'-मिति चकारस्थाने वाकारं घटयन्तः 'स्याद्रूप'मिति वाक्यं पूर्वपक्षपरं 'रूपं वाती-

न्द्रिय'मिति वाक्यं सिद्धान्तपरमिति च कल्पयन्तः भगवद्रूपं साधकानुग्रहार्थं न भगवता कल्पितम्, अपितु स्वाभाविकमेवेति वदन्ति । अनुग्रहार्थं कृतकं इति पूर्ववाक्ये उक्तं, रूपमतीन्द्रियमन्तःकरणप्रत्यक्षं इति उत्तरवाक्ये उक्तं वाक्यकृता । तत्र कृतकत्वमप्यस्तु अतीन्द्रियत्वं केवलमनोग्राह्यत्वं चास्तु भगवद्रूपस्य । कस्तयोर्विरोधः ? कथं अविरुद्धयोः पक्षयोः पूर्वोत्तरपक्षभावः ? इत्यपि नालोचितमभिनिवेशवशीकृतचेतोभिः परैरिति मध्यस्था एव पर्यालोचयन्तु । भगवद्रूपस्य नित्यत्वन्तु नोक्तं वाक्ये । एतत् सर्वमत्र निबन्धे प्रकाशितमस्माभिः ।

१२. तच्च भगवद्रूपं यथाभूतमेवेति द्रविडाचार्यैरुक्तं भाष्ये—'नह्यरूपाया देवताया रूपमुपदिश्यते, यथाभूतवादि हि शास्त्रम्' इति । अरूपाया देवताया न रूपमुपदिश्यते, भगवतो रूपध्यानं नाहार्याध्यासरूपं 'मनो ब्रह्म' इत्यादिध्यानवत्, अपितु विद्यमानरूपध्यानमेव, यथाभूतवादित्वाच्छास्त्रस्य इति द्रविडाचार्या वदन्ति । भगवत्पादा अपि तदनुसरन्तस्तथैव वदन्ति । तथा हि भगवत्पादानां वचनानि—'न चोपासनार्थश्रुतशब्दोत्थविज्ञानविषयस्यायथार्थत्वे प्रमाणमस्ति........तस्मात् यथाभूतानेवात्मेश्वरदेवतादीन् ग्राहयत्युपासनार्थं शास्त्रम्' 'तथा परमात्मेश्वरदेवतादिवस्तु........अलौकिकत्वात् तथाभूतमेव भवितुमर्हति' इति बृहदारण्यकभाष्ये प्रथमाध्यायतृतीयब्राह्मणविवरणावसरे, 'ध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिद्ध्यति' इति व्यतिहाराधिकरणे, 'सगुणविद्याविपाकावस्थानं त्वेतत् स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते' इति 'स्वाप्ययसंपत्त्यो'रित्यादिसूत्रभाष्ये च ।

१३. भगवद्रूपस्य यथाभूतत्वं च 'लौकिकं तद्वदेवेदं प्रमाणं स्वात्मनिश्चयात्' इति समन्वयाधिकरणावसानोदाहृतद्रविडाचार्यवचनप्रामाण्यात् आब्रह्मसाक्षात्कारावस्थायित्वरूपं व्यावहारिकत्वं, न निर्विशेषब्रह्मवत् त्रिकालाबाध्यत्वरूपं परमार्थिकत्वम् । रामानुजादयस्तु भास्करभाष्ये—'परमेश्वरस्यापि सर्वशक्तित्वात् उपासकानुग्रहाय रूपोपादानसंभवात्, किं मायामयं रूपम् ? नेति ब्रूमः, पारमार्थिकमेवैतत् । 'यथाभूतार्थज्ञापकं हि शास्त्रम्' इति कथितत्वेन,

तदभिमानेन, वाक्यकारभाष्यकारयोरपि तथैव हृदयं स्यादिति भ्राम्यन्तः भगवद्रूपं पारमार्थिकमिति वदन्ति ।

१४. तदसमीचीनम् । यतः वाक्यकाराः व्यावहारिकत्वपक्षावलंबिनः, भाष्यकाराश्च तदनुसारिणः। वाक्यकारा हि सद्विद्याविवरणस्थले 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतिमुपजीव्य प्रपञ्चस्य सत्त्वासत्त्वपक्षौ वाद्युक्तौ निरस्य 'न संव्यवहारमात्रत्वात्' इति सूत्रेण सदसद्विलक्षणत्वरूपं व्यावहारिकत्वपक्षमेव व्यवस्थापयामासुः । अयं वाक्यकारसिद्धान्तः संक्षेपशारीरके तदीयटीकासु कल्पतरौ च सम्यग्विवृतः । तदेतत् द्रविडात्रेयदर्शने प्रदर्शितमस्माभिः । वाक्यकारपक्षानुसारित्वं स्वीयमतस्याघोषयन्तः परे जगतो व्यावहारिकत्वस्थापनपराणि वाक्यकारवाक्यानि कल्पतरुसंक्षेपशारीरकाद्यनूदितानि कुतः परित्यक्तवन्त इति तान् मध्यस्थाः पृच्छन्तु ।

१५. सद्विद्याविवरणस्थले 'युक्तं तद्गुणकोपासनात्' इति वदन्तो वाक्यकाराः अन्तर्गुणकब्रह्मोपासनात् अन्तर्गुणकब्रह्मप्राप्तिं युक्तां मन्यन्ते । भाष्यकारा अपि तद्वाक्यग्रन्थविवरणस्थले 'अन्तर्गुणां प्रत्यग्गुणामेव भगवतीं परदेवतां भजत इति तत्र तद्गुणैव देवता प्राप्यते' इति व्याचक्षते। अत्र वाक्यगतं तद्गुणकपदं अन्तर्गुणार्थकतया, 'स्वपदानि च वर्ण्यन्ते' इति भाष्यलक्षणानुसारेण अन्तर्गुणपदं भाष्यगतं प्रत्यग्गुणार्थकतया च व्याख्यातम् । बहिःपदप्रतिसंबन्धि च अन्तःपदं पराग्व्यावृत्तप्रत्यग्वाचकमिति श्लिष्यते । गुणपदं स्वरूपपरम् , तथा च तद्गुणकोपासनात्—अन्तर्गुणकोपासनात्— प्रत्यक्स्वरूपब्रह्मोपासनात् तत्क्रतुन्यायेन तद्गुणैव—अन्तर्गुणैव—प्रत्यक्स्वरूपैव परब्रह्मरूपा परा देवता प्राप्यते इति युक्तमेव, इति वाक्यभाष्यग्रन्थवाक्यार्थः स्पष्टमेव प्रतीयते । 'तत् त्वमसी'ति महावाक्यार्थभूतप्रत्यग्ब्रह्मैक्यज्ञानात् प्रत्यग्ब्रह्माभेदाविर्भावः फलं वर्ण्यते अत्र वाक्यभाष्यकाराभ्याम् । भगवत्पादैरपि छान्दोग्यविवरणे तथैव व्याख्यातम् । संक्षेपशारीरकेऽपि द्रविडाचार्यभाष्यतात्पर्यमित्थमेव स्फुटीकृतम् । तदेतत् निबन्धेऽस्मिन् प्रदर्शितमस्माभिः ।

१६. तदेतदसहमानाः रामानुजादयः अन्यथा व्याचक्षते—'अन्तर्गुणा देवता' इत्यस्य, दैवतात् पृथक्तया अनुपास्यत्वेऽपि वस्तुतोऽन्तर्विद्यमानसत्यकामत्वादिगुणगणविशिष्टा देवता इत्यर्थः। तथा च सगुणैव देवता दहरादिविद्यायामिव सद्विद्यायामप्युपास्या, सगुणैव च प्राप्या इति। द्रविडभाष्यवाक्यपाठमप्यन्यथयन्ति—'अन्तर्गुणामेव देवतां भजत इति तत्रापि सगुणैव देवता प्राप्यते' इति। अत्र अन्तर्गुणा इत्यस्य प्रत्यग्गुणेति व्याख्यानभागं संक्षेपशारीरकानूदितं परे निष्कासितवन्तः। 'तद्गुणैव' इत्यस्य स्थाने 'सगुणैव' इति अन्यथाकृतम्। दहरादिसगुणविद्यासमुच्चायकं अपिपदं प्रक्षिप्तम्। तथा च आवापोद्वापान्यथाकरणैः द्रविडाचार्यवाक्यं परैः कदर्थितम्। द्रविडाचार्यवाक्ये पूर्वं अन्तर्गुणामिति प्रक्रान्ततया तद्गुणा इति पदेन तस्याः परामर्शः क्रियते। यतः अन्तर्गुणां भजते, अतः तत्क्रतुन्यायेन तद्गुणा—अन्तर्गुणैव प्राप्यते इत्युक्तया तद्गुणकोपासनात् तद्गुणकप्राप्तिः युक्ता इति वाक्यकारवाक्याशयः भाष्यकृता स्फुटीक्रियतेऽत्र। तद्गुणकेति वाक्यग्रन्थे कोऽसौ गुण इत्याशङ्कमानं प्रति अन्तर्गुणेति पदेन अन्तश्शब्दितं प्रत्यक्त्वं गुण इति विवृतं भाष्यकृता। परेतु कोऽसौ गुण इति प्रश्नस्य प्रतिवचनमनुक्त्वैव गुणस्य अन्तर्विद्यमानत्वमात्रं वदन्तः असंबद्धमेव व्याचक्षाणाः कदर्थयन्ति वाक्यभाष्यग्रन्थद्वयमपीति मध्यस्था एव पर्यालोचयन्तु। इदमपि विवृतमत्र निबन्धे।

१७. 'तत्त्वमसी'ति महावाक्यस्यार्थवर्णनावसरे वाक्यकारैः 'सिद्धन्तु निवर्तकत्वात्' इति सूत्ररूपं वाक्यमुक्तम्। तद्विवरणमित्थं कृतं भाष्यकारैः—व्याधसंवर्धितराजकुमारस्य व्याधजातिमात्मानं मन्यमानस्य आप्तैः समीचीनकारणबलात् राजकुमारत्वप्रतिबोधनरूपाख्यायिकानुसारेण संसारिणमात्मानं मन्यमानस्य जीवस्य समीचीनयुक्तिबलात् अज्ञातो ब्रह्मभावः गुरुणा प्रतिबोध्यत इति अविद्यानिवर्तकत्वेन तत्त्वमस्यादिवाक्यस्य प्रामाण्यं सिद्धम्। न तु प्रकाशकत्वेन वाक्यस्य प्रामाण्यम्। आत्मरूपतया स्वप्रकाशे ब्रह्मणि प्रकाशाधानायो-

गात् इति। एवं आख्यायिकाप्रदर्शनपूर्वकं द्रविडाचार्यव्याख्यानं अद्वैतग्रन्थेषु सर्वत्र प्रसिद्धम्। अयं सर्वप्रसिद्धोऽर्थ एव निगूहितः परैः स्वीयसिद्धान्तविरोधात्।

१८. 'आत्मेत्येव तु गृण्हीयात्' इति वाक्येन परमात्मनः जीवाभिन्नतया चिन्तनमुदितं वाक्यकारैः। तस्य शरीरशरीरिभावेन चिन्तनतात्पर्यकत्वं ब्रुवाणाः परे वाक्यग्रन्थं कदर्थयन्तीति तु प्रसिद्धमेव।

१९. रामानुजादिभिः अनूदितं सगुणब्रह्मपरवाक्यभाष्यग्रन्थवाक्यजातं अद्वैतिनां सगुणब्रह्माभ्युपगच्छतामनुकूलमेव न प्रतिकूलम्। अद्वैतिभिरनूदितं निर्गुणब्रह्मपरवाक्यभाष्यग्रन्थवाक्यजातन्तु रामानुजादीनां निर्गुणं ब्रह्मानभ्युपगच्छतां प्रतिकूलम्। अतएव तैः तन्नोदाहृतं, परित्यक्तम्।

२०. 'अञ्जसैव विश्वसृजो रूपम्' इत्यादिपूर्वोक्तद्रविडाचार्यवाक्ये प्रथमतः 'न वा मायामात्रम्' इत्यधिकभागं प्रक्षिप्य मुद्रापितवन्तः वेदान्तसारग्रन्थं रामानुजप्रणीतं केचन साहसिकाः। वेदार्थसंग्रहे तदिदं वाक्यं रामानुजार्येण उक्तं, तत्र नवा मायामात्रमित्यधिकं न दृश्यते। तत्वटीकायामपि 'अञ्जसैव' इत्येव आरभ्य द्रमिडवाक्यमनूदितं, न तु 'न वा मायामात्र' मित्यप्यनूदितम्। अद्वैतिनां प्रतिपक्षा द्रविडाचार्या इति प्रकाशयितुं रन्ध्रान्वेषणपरा आधुनिका एवमादिव्याकुलीकरणमाचरन्ति इति निबन्धे प्रदर्शितमस्माभिः।

२१. 'नमः प्रवरगुणैकास्पदाय' इत्यादिमङ्गलं मीमांसान्यायकोशाख्यग्रन्थस्यादौ विद्यमानं अद्यापि सुरक्षितकोशागारे मद्रपुरान्तर्वर्तिनि तत्रैव परिदृश्यमानं द्रविडाचार्यभाष्यमङ्गलत्वेन वर्णयन्ति श्रुतप्रकाशिकाकाराः तत्वटीकाकाराश्च। एवं वर्णनेन हेत्वन्तरैश्च सुदर्शनो वेङ्कटनाथश्च उभावपि द्रविड़भाष्यवाक्यग्रन्थद्वयमप्यपरिदृष्टवन्ताविति अस्माभिः निबन्धे सम्यक् प्रकाशितम्।

२२. एवं प्रबलप्रमाणैः छान्दोग्योपनिषद्विवरणमुखेन स्पष्टमेव अद्वैतसंप्रदायप्रदर्शकत्वेन वाक्यभाष्यग्रन्थयोः वस्तुतः स्थितौ परिदृश्यमानायामपि तयोः विशिष्टाद्वैतसंप्रदायप्रदर्शकत्वं तद्ग्रन्थयोरपि विशिष्टाद्वैतसंप्रदायप्रथम-

प्रवर्तकबोधायनमहर्षिकृतविस्तीर्णब्रह्मसूत्रवृत्तिसंक्षेपात्मकत्वं च धैर्येण उद्घोषयन्ति रामानुजादयः । अहो साहसमेतेषाम् । छान्दोग्योपनिषदर्थविवरणात्मकवाक्यग्रन्थव्यतिरेकेण ब्रह्मनन्दिना वा, तद्वाक्यभाष्यरूपग्रन्थव्यतिरेकेण द्रविडाचार्येण वा ब्रह्मसूत्रोपरि कोऽपि ग्रन्थः कृत इत्यत्र प्रमाणं नोपलभ्यते । एवं वस्तुतत्वे स्थितेऽपि केचन नवीनाः परे ब्रह्मसूत्रोपरि तयोः कृतिरस्ति सा विशिष्टाद्वैतसिद्धान्तावलंबिनी इति वदन्ति । सापि कृतिर्बोधायनवृत्तिवदेव गगनकुसुमसमा इति प्रामाणिका अभिप्रयन्ति । विद्यमानत्वेन अभ्युपगमेऽपि, सापि कृतिः प्रसिद्धछान्दोग्यविवरणरूपतदीयकृतिवदेव अद्वैतपरैव स्यादिति तथापि परकीयमनोराज्यनिर्वाहो न भविष्यतीति परे अवगच्छन्तु ।

२३. बोधायनो महर्षिः ब्रह्मसूत्रवृत्तिकार इति, स्वीयसंप्रदायस्य प्रथमप्रवर्तक इति च पूर्वतनो यामुनोऽपि स्वीयग्रन्थेषु न वदति । पश्चात्तना रामानुजादयः परं तथा वदन्ति । पूर्वतनो यामुनस्तु ब्रह्मसूत्राणां परिमितगंभीरविवरणकारत्वेन द्रमिडभाष्यकारं, विस्तृतविवरणकारत्वेन गंभीरन्यायसागरभाषित्वेन च श्रीवत्सांकमिश्रं चावर्णयत् । टंकापराभिधं ब्रह्मनन्दिनं मतान्तरस्थं अपरिग्राह्यत्वेनाह । स च यामुनोक्तः द्रमिडभाष्यकारः द्रमिडशब्देन यद्यपि द्रविडाचार्य इति आपाततः प्रतिभाति, तथापि सः द्रमिडभाषामयगाथाकारः स्तोत्ररत्ने यामुनेनापि विशेषतो महीकृतः शठकोप एव इति सयुक्तिकं द्रविडात्रेयदर्शने निरूपितमस्माभिः । अत एव यामुनः आत्मसिद्धौ द्रविडाचार्येणेत्यनुक्त्वा द्रमिडभाष्यकृता इत्यवोचत् । द्रमिडस्य हि साक्षात् द्रमिड इत्येवोक्तिरुचिता । न तु द्रमिडकृतं यत् भाष्यं तत्कृत् इति शिरोवेष्टनप्राणायामतुल्या उक्तिरुचिता । शठकोपस्य तु द्रमिडभाषामयप्रबन्धरूपभाष्यकृत् इति उक्तिरुचितैव ।

२४. यद्यपि च शठकोपः स्वातन्त्र्येणैव स्वीयं द्राविडप्रबन्धं प्रणीतवान्, न ब्रह्मसूत्रार्थविवरणरूपतया । तदेतत् जगति प्रसिद्धमेव । तथापि ब्रह्मसूत्रार्थसंक्षेपात्मकं द्रमिडभाष्यरूपं तं प्रबन्धमाचक्षाणः यामुनः उभयवेदान्तत्वेन

स्वीयाभिमतसंस्कृतद्राविडग्रन्थसामरस्यं इदंप्रथमतया आपादयामास। तदर्वाचीना उभयवेदान्तिनस्सामोदं प्रथयन्ति। द्रमिडभाष्यविवरणकृत् श्रीवत्सांकमिश्रस्तु यामुनपितामहः शठकोपान्तेवासी विशिष्टाद्वैतसंप्रदायस्य इदंप्रथमतया प्रवर्तकः नाथमुनिरेवेत्यपि सयुक्तिकं निरूपितमस्मिन्निबन्धे। श्रीरङ्गनाथपदस्थाने श्रीवत्सांकपदं योजितं यामुनग्रन्थे कैश्चित्।

२५. श्रीवत्सांकमिश्रवृत्तौ पाञ्चरात्राप्रामाण्ये निरूपिते सत्यपि यामुनः पाञ्चरात्राधिकरणं पाञ्चरात्रप्रामाण्यसमर्थनपरतया इदंप्रथमतया व्याचख्यौ। तदिदं यामुनकृतागमप्रामाण्यग्रन्थदर्शने विशदम्। पाञ्चरात्राप्रामाण्यमेव च पूर्वतनवृत्तिग्रन्थेषु सर्वेषु प्रतिपादितमिति वल्लभभाष्यप्रकाशे पुरुषोत्तमोऽपि वदति। भास्कराचार्योऽपि स्वीयभाष्ये पाञ्चरात्राप्रामाण्यमेव निरूपितवान्। वाक्यभाष्यग्रन्थद्वयानुवादकोऽपि भास्करः बोधायनवृत्तिं नानूदितवान्। एतत् सर्वमत्र निबन्धे विशदम्। तेन स्वीयमतस्यार्षत्वप्रकटीकरणाय इदंप्रथमतया रामानुजादय एव बोधायनवृत्तिं कल्पितवन्त इति स्पष्टमेव ज्ञायते। देवानामेव विषये बोधायनवृत्तिसाफल्यं ब्रुवाणास्सुदर्शनवेङ्कटनाथादयः मूलोके बोधायनवृत्त्यसत्वमेव पर्यायोक्त्या आविष्कुर्वन्ति।

२६. तत्रापि बोधायनवृत्तौ वाक्यसप्तकमेवानूदितवन्तः परे। नान्यद्वाक्यम्। बोधायनीयविस्तृतवृत्तिग्रन्थद्रष्टृत्वेन उद्घोषिता रामानुजादयः मुख्यस्थलेषु बहुषु स्वीयमतसाधकतया प्रदर्शनीयमपि कुतो नान्यद्बोधायनीयवृत्तिवाक्यं प्रदर्शयामासुरिति निगूढमेतत् वस्तुतत्वं प्रामाणिकशंकास्पदं विचिन्त्यं सर्वैः। प्रदर्शितेष्वपि सप्तसु वाक्येषु नातीवाद्वैतमतविरोधश्चकास्ति। व्याख्याभेदः परं केषुचित् स्थलेषु दृश्यते। तदिदमपि निबन्धे विशदीकृतमस्माभिः।

२७. यामुनग्रन्थे श्रीकण्ठाचार्यः निर्दिष्ट इत्युक्तं निबन्धेऽस्मिन्। श्रीकण्ठपदस्थाने श्रीवत्सांकपदप्रक्षेपेण श्रीकण्ठनाम निगूहितमर्वाचीनैः। श्रीकण्ठश्च भास्करभाष्ये निर्दिष्टः रामानुजादिभ्यः प्राचीनः। तदीयविशिष्टाद्वैत-

मार्गमेवावलंब्य रामानुजादिभिः स्वीयमतं नूतनमिव प्रदर्शितम्। शिवपारम्यादि-रूपे स्वानभिमते कतिपयविषये श्रीकण्ठमतमपि प्रतिक्षिप्तं रामानुजादिभिः। तन्नाम परं नोद्घाटितं स्वीयमतस्य तन्मूलकत्वप्रकाशापत्तिभीत्या।

२८. रामानुजमतचौर्यकृत् श्रीकण्ठ इति वल्लभभाष्यप्रकाशकारादिभिः वैपरीत्येन वर्णितं वैष्णवत्वप्रत्यासत्त्येति आविष्कृतं निबन्धेऽस्मिन्। यामुनप्रणीतसिद्धित्रयागमप्रामाण्यादिग्रन्थमुखेनावगताः यामुनशिष्याणां स्वाचार्याणां उपदेशमुखेनावगताश्चार्था एव द्राविडप्रबन्धसारभूताः रामानुजग्रन्थनिर्माणस्य मूलभूताः न बोधायनवृत्त्यादय इत्यपि वेङ्कटनाथादिग्रन्थमुखेन स्फुटीकृतमत्र निबन्धे, एवं च बोधायनवृत्तिः गगनसुमसमेति सम्यक् निरूपितमत्र।

२९. बोधायनवृत्तिसत्यत्वसंरक्षणार्थं बोधायनः उपवर्षः कृतकोटिरिति एकस्यैव आचार्यस्य नामधेयत्रयमिति प्रकाशयितुं मणिमेखलाख्यद्राविडप्रबन्धावन्तिसुन्दरीग्रन्थसुचरितमिश्रकृतकाशिकाग्रन्थतत्त्वटीकाग्रन्थप्रपञ्चहृदयग्रन्थपञ्चकमुखेन प्रयस्यतां परेषां नव्यानां केषांचित् प्रयासस्सर्वोऽपि वितथीकृतः तत्तद्ग्रन्थानां सम्यक्परीक्षणेन निबन्धेऽस्मिन्। बोधायनः विंशतिलक्षणीवृत्तिकृदिति वितथैतिह्यमुखेन वेङ्कटनाथवर्णनमप्रमाणीकृतं निबन्धे। रुद्ररोदनार्थवादस्य श्रुतिगतस्य भूतार्थवादत्वकीर्तनं वेङ्कटनाथस्य देवताद्वेषमूलकं न प्रामाणिकमिति प्रकाशितमत्र।

३०. बोधायनमहर्षेः धर्मगृह्यश्रौतसूत्रस्मृतिकारस्य महादेवमहापुरुषयोः सामरस्येन प्रतिष्ठापरिचर्यादिविधायकस्य विभूतिधारणतत्संपादनप्रकारमहादेवपादोदकप्राशनेशानबल्यादिविधायकस्याद्वैतिनः शिवभक्तस्य च विशिष्टाद्वैतसंप्रदायप्रवर्तकत्वं न संभवतीति स्फुटीकृतं निबन्धेऽस्मिन्। बोधायनमहर्षिद्वित्वं चाप्रामाणिकमिति प्रकाशितमत्र।

३१. जैमिनिकृतसंकर्षकाण्डात् कर्ममीमांसापरिशिष्टरूपात् शबरस्वाम्यादिभिरनुदितात् अद्वैतविशिष्टाद्वैतग्रन्थेषु परामृष्टात् व्यतिरेकेण काश-

कृत्स्नप्रणीततया पराशरभट्टवेङ्कटनाथश्रीनिवासाचार्यादिभिरुक्तस्य विष्णुपारम्य-बोधकस्य, ब्रह्ममीमांसाप्रथमसूत्रगतब्रह्मपदस्य विष्णुपरत्वावेदकतत्पूर्वतनविष्णुपर-सूत्रत्रयकीर्तनेन परिसमाप्ततया वेङ्कटनाथादिभिरुद्घोषितस्य संकर्षकाण्डस्य, बोधा-यनवृत्तिवदेव गगनकुसुमसमत्वमाविष्कृतमत्र निबन्धे सुनिपुणम् ।

३२. परेषामार्षवृत्तिभक्तंमन्यानां आर्षवृत्तिखण्डनं चाविष्कृतमत्र । भगवत्पादमतविरोधिनः अत एव स्वाभिमतस्य भास्करग्रन्थस्य निरीक्षणेन तदुक्त-च्छायया पदमात्रविपर्यासपूर्वकं कतिपयवाक्यनिर्माणेन तद्वाक्यानां बोधायनवृत्ति-गतत्वेन प्रकाशनं परैराचरितमिति च गूढं तत्त्वं निरूपितमत्र । विशिष्टाद्वैत-मतस्य नवीनत्वं प्राचीनबोधायनमहर्ष्यनुपज्ञत्वं च वेङ्कटनाथवचनमुखेना-विष्कृतमत्र ।

३३. वाक्यभाष्यकारयोः स्वीयसंप्रदायप्रवर्तकत्वविषये सुदर्शनस्य हृदि स्थितोऽनाश्वासः उद्घाटितोऽत्र । अभिनवद्रविडाचार्याणामुक्त्या द्रविडाचार्याणां भगवत्पादैः समन्वयाधिकरणान्तोदाहृताद्वैततत्त्वबोधकश्लोकत्रयप्रणेतृत्वावगमादपि द्रविडाचार्याणां अद्वैतसंप्रदायप्रवर्तकत्वं निर्धारितमस्मिन्निबन्धे । अद्वैतमतावलं-बिन आचार्यस्य अभिनवद्रविडाचार्यबिरुदबलात् प्राचीनद्रविडाचार्यस्यापि अद्वैत-मतावलंबित्वमिति निरूपितमत्र ।

३४. व्यासपूजाकाले अद्वैतिभिः परमहंसैः प्राधान्येन पूज्यमानत्वा-दपि द्रविडाचार्याणां अद्वैतसंप्रदायप्रवर्तकत्वं प्रकाश्यते इति निगदितमत्र ।

३५. तस्मात् औपनिषदं, वसिष्ठमहर्षिणा ज्ञानवासिष्ठमुखेन उद्घाटितं, (तदेतत् 'ऋषिभिर्बहुधा गीतम्' इति गीताविवरणस्थले वसिष्ठादिभिः इति भगवत्पादैर्व्याख्याकरणेन सूचितम् । परे तु पराशरादिभिरिति व्याचक्षते) बादरायणाचार्यैः ब्रह्मसूत्रमुखेन निर्धारितं, उपवर्षादिभिः वृत्तिकारैः विशदीकृतं, प्राचीनैः ब्रह्मनन्दिद्रविडाचार्यादिभिः छान्दोग्योपनिषद्विवरणमुखेन प्रकाशितं, गौडपादाचार्यैः माण्डूक्योपनिषद्विवरणभूतकारिकामुखेन स्पष्टीकृतं, भगवत्पादैः

विशुद्धसंप्रदायावलंबिभिः भाष्यादिमुखेन स्थापितं, पद्मपादसुरेश्वरादिभिराचार्यैः टीकावार्तिकादिमुखेन निर्लुठितम् , संक्षेपशारीरकाचार्यविवरणाचार्यवाचस्पतिमिश्रादिभिः आविष्कृतभावं, कल्पतरुपरिमलाद्वैतसिद्धिलघुचन्द्रिकाद्यसंख्येयग्रन्थैर्निष्कण्टकीकृतं, विद्यारण्यश्रीचरणैस्सरसमावेदितं, अनाद्यविच्छिन्नसत्संप्रदायागतं, परमानन्दावहं परमशान्तिप्रदमद्वैतदर्शनं यथाधिकारं संसेव्य सर्वेऽपि कृतकृत्याः प्राप्तप्राप्याश्च भवन्त्विति संप्रार्थ्य उपसंह्रियते ।

३६. विशुद्धविज्ञानैश्शुचिहृदयैर्भगवत्पादैः प्रवर्तिते विमले सर्वदर्शनशिरोमणौ अद्वैतदर्शने असूयालुभिः कैश्चित् 'ऋषेरभिप्रायं ऋषिरेव च स्वतो वेदितुमर्हति न तु जडमतिरितरो जनः' इत्यादिभिः सहृदयहृदयोद्वेजकैरसंख्यैश्शब्दैराकुलीक्रियमाणे,तच्छब्दश्रवणादुद्विग्नहृदयोऽहं—वस्तुतत्वं कीदृशं वर्तते ? वस्तुतो महर्ष्यभिप्रायवेत्तारः के ? के वा प्रतारकाः? इति तत्वान्वेषणाय प्रवृत्तः भगवत्पादानामनुग्रहेण तद्विषयकदृढप्रवृत्तिमान् अभवम् ।

३७. एतस्मिन्नेव समये भगवत्पादापरावतारभूतैः वेदधर्मशास्त्रपरिपालनसभामुखेन आसेतुहिमाचलं वैदिकसनातनधर्माभिधकर्मयोगस्य, 'तिरुप्पावै तिरुवेम्बावै महानाडु' इति प्रसिद्धसभामुखेन सर्ववर्णसामरस्येन हरिहरतारतम्यबुद्धिवर्जितभगवद्भक्तियोगस्य, अद्वैतसभामुखेन ज्ञानयोगस्य च प्रचारणैकबद्धदीक्षैः करुणामसृणान्तःकरणानवरतविचिन्तितलोकयोगक्षेमैः शान्तिदान्त्यादिसमस्तमङ्गलगुणग्रामाभिरामैः तपोनिष्ठैः पवित्रमूर्तिभिः विततकीर्तिभिः अद्वैतानुभवरसिकैः श्रीकाञ्चीकामकोटिपीठाधिपतिभिः जगद्गुरुभिः शङ्कराचार्यवर्यैः परमहंसपरिव्राजकैः श्रीचन्द्रशेखरेन्द्रसरस्वतीश्रीचरणैः अद्वैतसभावज्रमहोत्सवसमये श्रीद्रविडाचार्यानधिकृत्य त्वया उपन्यासः कर्तव्य इत्याज्ञापितोऽहं तामाज्ञां शिरसा वहन् द्रविडाचार्यानधिकृत्य कुत्र ग्रन्थे किमुक्तमिति चान्वेषणपरोऽभवम् ।

३८. अन्विष्यमाणे च स्वपरग्रन्थेषु तत्त्वे द्रविडाचार्याः वस्तुतः अद्वैतस्थापकाचार्याः अपि सन्तः व्याधसंवर्धितराजकुमाराख्यायिका या द्रविडा-

चार्योक्ता तद्रीत्यैव विशिष्टाद्वैतस्थापकाचार्या अभवन्। एतदाश्चर्यं बुध्वा विशेषतो गवेषणे ब्रह्मनन्दिनोऽपि द्रविडाचार्यभाष्यमूलकाराः अन्यथा प्रकाशिता अपि परैः अद्वैतस्थापकाचार्या इति तत्त्वमपि अवगतम्। तदुभयग्रन्थमूलभूतत्वेन परप्रोक्ता बोधायनवृत्तिरपि गगनकुसुमसमेति तत्त्वं अवगतम्। एवंच व्यासमहर्षेरभिप्रायं परमाद्वैती शिवभक्तो बोधायनमहर्षिरेव विजानीयात्। परंतु सः ब्रह्मसूत्रवृत्तिं न प्रणीतवान्। 'शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः' इत्युक्त्या नारायणावतारस्य व्यासमहर्षेः अभिप्रायं शङ्करावतारो भगवत्पाद एव च स्वतो वेदितुमर्हति, न तु जडमतिरितरो जनः इत्यपि तत्त्वं सम्यगवगतम्।

३९. प्रतारकाणां साडंबरैर्वचनैर्निगूढमपि एतत् वस्तुतत्त्वं महता परिश्रमेण स्वीयपरकीयबहुग्रन्थावलोकनेन निश्चिन्वन् अहं इतःपरमपि परकीयोद्घोषणैः प्रामाणिकः मा भ्राम्यतु इति आलोचयन् तत्त्वाविष्काराय अमुं निबन्धं अकरवम्, न तु रागद्वेषादिक्षुद्रकारणवशादिति वस्तुतत्त्वं सविनयं सांजलिबन्धं च विज्ञापयामि। स्वयमपि पण्डिता अन्यत्राभिनिवेशात् परिशीलयन्तु वस्तुतत्त्वमिति प्रार्थये ॥

इत्थं विद्वद्विधेयः
पोलकं. सु. श्रीरामशास्त्री,
शास्त्ररत्नाकरः
मद्रपुरसंस्कृतमहाकलाशालासाहित्यवेदान्तोपाध्यायः.

॥ श्रीः ॥

॥ श्रीमच्छङ्करभगवत्पादेभ्यो नमः ॥

# ॥ द्रविडात्रेयदर्शनम् ॥

## (१) मङ्गलाचरणं प्रतिज्ञा च ।

विशुद्धविज्ञानघनान् शुचिस्वान्तान् जगद्गुरून् ।
नमामि भगवत्पादान् त्र्यन्ताब्जविभाकरान् ॥ १ ॥

काञ्च्यां श्रीकामकोट्याख्यपीठाधीशान् जगद्गुरून् ।
श्रीचन्द्रशेखरानिन्द्रसरस्वत्यभिधान्नुमः ॥ २ ॥

पितरं सुन्दराभिख्यं ब्रह्म नाम्नाऽर्थतोऽपि च ।
त्र्यन्तनिष्णातधियं तुर्याश्रमिणमाश्रये ॥ ३ ॥

पूज्यान् हरिहरान् कृष्णान् दण्डपाणींश्च सादरम् ।
नौमि वेङ्कटरामांश्च मखिनो गुरुपुङ्गवान् ॥ ४ ॥

आचार्यं प्रणमामि सादरमहं तं ब्रह्मनन्दीति यः
प्रख्यातो मुनिरत्रिवंश्य उदितस्संक्षेपशारीरके ।
छान्दोग्योपनिषच्च येन विवृता वाक्यैर्हि सूत्रात्मभिः
यं ग्रन्थेषु परः पुनः पुनरपि ब्रूते प्रमाणं परम् ॥ ५ ॥

आचार्यान् द्रविडाख्यया सुविदितान् स्तौमि प्रमाणीकृतान्
श्रीमच्छङ्करदेशिकप्रभृतिभी रामानुजाद्यैरपि ।
छान्दोग्योपनिषत्प्रमेयविवृतिः यैर्ब्रह्मनन्दीरिता
वाक्याख्याऽतिगभीरसूत्रसरणिर्भाष्येण संभूषिता ॥ ६ ॥

अद्वैते संप्रदायं विमलमकलयन् वाक्यकृद्ब्रह्मनन्दी-
त्याख्यास्तद्भाष्यकारा द्रविड इति जगद्विश्रुताश्चापि पूज्याः।
सूत्रैर्धर्मान् व्यतानीत् हरिहरभजनं चापि बोधायनर्षिः
तस्याद्वैतप्रतीपा गगनसुमसमा ब्रह्मसूत्रस्य वृत्तिः ॥ ७ ॥

अद्वैतसंप्रदायस्थौ द्रविडब्रह्मनन्दिनौ ।
छान्दोग्योपनिषद्वाक्यभाष्यकर्तृतया मितौ ॥ ८ ॥

धर्मगृह्यश्रौतसूत्रकृज्जगद्विदितो मुनिः ।
बोधायनोऽपि नेशद्विट् नाप्यद्वैतविरुद्धधीः ॥ ९ ॥

तस्यासंभाविता ब्रह्मसूत्रवृत्तिः परेरिता ।
अद्वैतबाधिका मूलं वाक्यभाष्यकृतोर्द्वयोः ॥ १० ॥

भाष्यवाक्यकृदाचार्यद्रविडब्रह्मनन्दिनोः ।
वाक्यान्यत्र विचार्यन्ते द्रविडात्रेयदर्शने ॥ ११ ॥

भगवतो द्रविडाचार्यस्य वा, तदीयभाष्यव्याख्येयवाक्यनामग्रन्थकर्तुः भगवतः आत्रेयस्य ब्रह्मनन्दिनो वा वाक्यानि कानि कानि कुत्र कुत्र भगवत्पाद-तदनुयायिभिः रामानुजादिभिश्च प्रमाणीकृतानि ? तानि चाद्वैतदर्शनस्य पोषकाणि ? उत ब्रह्मजीवजगतां शरीरशरीरिभावनिबन्धनविशिष्टाद्वैतदर्शनस्य ? इति संक्षेपतो विमृशामः अस्मिन्निबन्धे द्रविडात्रेयदर्शनाभिधे, प्रासङ्गिकं च पराभिमतबोधायनीयब्रह्मसूत्रवृत्तेरसंभावितत्वं, श्रीकण्ठाचार्यस्य रामानुजादिभ्यः प्राचीनत्वमित्यादिकमन्यत् ।

## (२) बृहदारण्यकभाष्ये तद्वार्तिकादौ च द्रविडाचार्यवाक्यानुवादः ।

भगवत्पादैः बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायप्रथमब्राह्मणविवरणे स्वोक्तार्थे द्रविडाचार्याः प्रमाणीकृताः । तथाहि—‘अत्र च संप्रदायविदः आख्यायिकां संप्रचक्षते—कश्चित्किल राजपुत्रो जातमात्र एव मातापितृभ्यामप-

विद्धः, व्याधगृहे संवर्धितः, सोऽमुष्यवंश्यतामजानन् व्याधजातिप्रत्ययः व्याधजातिकर्माण्येवानुवर्तते। न राजाऽस्मीति राजजातिकर्माण्यनुवर्तते। यदा पुनः कश्चित्परमकारुणिकः राजपुत्रस्य राजश्रीप्राप्तियोग्यतां जानन् अमुष्य-पुत्रतां बोधयति—न त्वं व्याधः, अमुष्य राज्ञः पुत्रः कथञ्चित् व्याधगृहमनुप्रविष्ट इति। स एवं बोधितः त्यक्त्वा व्याधजातिप्रत्ययकर्माणि पितृपैतामहीमात्मनः पदवीमनुवर्तते राजाऽहमस्मीति ॥

तथा किलायं परस्मादग्निविस्फुलिङ्गादिवत् तज्जातिरेव विभक्तः इह देहेन्द्रियादिगहने प्रविष्टः असंसारी सन् देहेन्द्रियादिसंसारधर्ममनुवर्तते—देहेन्द्रियसङ्घातोऽस्मि कृशः स्थूलः सुखी दुःखीति परमात्मतामजानन् आत्मनः। न त्वमेतदात्मकः परमेव ब्रह्मासि असंसारीति प्रतिबोधित आचार्येण, हित्वा एषणात्रयानुवृत्तिं ब्रह्मैवास्मीति प्रतिपद्यते'॥ इति ॥

आनन्दगिर्याचार्यैः अत्र एवमवतारितम्—'तत्त्वमस्यादिवाक्यमैक्यपरम्, तच्छेषः सृष्ट्यादिवाक्यं, इत्युक्तेऽर्थे द्रविडाचार्यसंमतिमाह—अत्र चेति' इति॥ अत्रैव स्थले बृहदारण्यकवार्तिकवचनम्—

"आचक्षते तथा चात्र केचिदाख्यायिकां शुभाम्।
यथाऽभिलषितार्थोऽयं यथा सम्भाव्यते स्फुटः"॥ इति ॥

अत्राप्यानन्दगिर्यवतारिका—'तत्त्वमादिवाक्यमैक्यपरम्, तच्छेषः सृष्ट्यादिवाक्यमित्यत्र द्रविडाचार्यप्रणीतां आख्यायिकामवतारयति—आचक्षते इति ॥' इति।

## (३) तोटकाचार्यकृतो द्रविडाचार्यनिर्देशः।

तोटकाचार्याः भगवत्पादान्तेवासिनः श्रुतिसारसमुद्धरणाभिधे प्रकरण-ग्रन्थे तोटकवृत्तनिबद्धे पूर्वोक्त एव विषये प्रमाणतया द्रविडाचार्यान् स्मरन्ति—

"द्रविडोऽपि च तत्त्वमसीति वचो विनिवर्तकमेव निरूपितवान् ।
शबरेण विवर्धितराजशिशोः निजजन्मविदुक्तिनिदर्शनतः ॥"

इति । श्लोकः २०६ ॥

तद्व्याख्यायां सच्चिदानन्दयोगिकृतायान्तु — 'संप्रदायविद्वचनमप्यत्र प्रमाणमित्याह—द्रविड इति । द्रविडाचार्यश्च उपदेशसाहस्र्यां—"श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये" इत्यादिना तत्त्वमसीति वचः तत्त्वमसीति वाक्यं अज्ञानस्य निवर्तकमेवेति निरूपितवान्'—इति द्रविडपदं भगवत्पादपरमभिप्रेत्य व्याख्यातं, तत् पूर्वोक्तबृहदारण्यकभाष्यतद्वार्तिकाद्यनवलोकनमूलकम् ॥

"एवं गौडैर्द्राविडैर्नः पूज्यैरर्थः प्रभाषितः" इति नैष्कर्म्यसिद्धौ द्राविडपदेन भगवत्पादानामुक्तत्वमपि व्याख्यातुः भ्रमस्य मूलम् ॥

## (४) उज्ज्वलायां द्रविडाचार्योक्ताख्यायिकासंवादः ।

आपस्तम्बधर्मसूत्रवृत्तौ उज्ज्वलायामध्यात्मपटलविवरणावसरे हरदत्तेन इयं कथा जीवब्रह्मैक्यपरा उपवर्णिता वाक्येन, पश्चादुक्तार्थसंग्राहकः श्लोकोऽप्युक्तः—

'नीचानां वसतौ तदीयतनयैस्सार्धं चिरं वर्धितः
तज्जातीयमवैति राजतनयः स्वात्मानमप्यञ्जसा ।
संघाते महदादिभिस्सह वसंस्तद्वत्परः पूरुषः
स्वात्मानं सुखदुःखमोहकलिलं मिथ्यैव धिङ्मन्यते ॥
दाता भोगपरस्समग्रविभवो यश्शासिता दुष्कृतां
राजा स त्वमसीति मातृमुखतः श्रुत्वा यथावत् स तु ।
राजीभूय जयार्थमेव यतते तद्वत्पुमान् बोधितः
श्रुत्या त्वत्त्वमसीत्यपास्य दुरितं ब्रह्मैव सम्पद्यते ॥' इति ।

## (५) माण्डूक्यभाष्यादिषु ब्रह्मनन्दिवाक्यानुवादः ।

द्रविडाचार्यैः 'तत्त्वमसी'ति वाक्यस्य निवर्तकत्वेन प्रामाण्यं स्वव्याख्येय-वाक्यकारब्रह्मनन्द्युक्तं व्याधविवर्धितराजपुत्रदृष्टान्तेन स्वयमुपपादितं परम् । तद्व्याख्येयं वाक्यन्तु '**सिद्धन्तु निवर्तकत्वात्**' इति ब्रह्मनन्दिप्रोक्तम् । तच्च वाक्यं भगवत्पादैः माण्डूक्योपनिषद्भाष्ये वैतथ्यप्रकरणे 'न निरोधो नचोत्पत्तिः' इति कारिका (३२) विवरणावसरे (पुट ९४) उक्तम् । "सिद्धन्तु निवर्तकत्वा'दित्यागमविदां सूत्रम्" इति । तत्रानन्दगिर्याचार्यैः व्याख्यातं—'उक्तेऽर्थे द्रविडाचार्यसम्मतिमाह— सिद्धं त्विति । ब्रह्मणि पदानां व्युत्पत्त्यभावेऽपि सिद्धमेव शास्त्रप्रामाण्यम् । अभावबोधनव्युत्पन्ननञ्पदसंसृष्टैः स्थूलादिव्युत्पन्नपदैः स्वाभाविकद्वैताभावबोधनेनाध्यस्तनिवर्तकत्वादिति सूत्रार्थः ।' इति ॥

तथा ज्ञानवासिष्ठे निर्वाणप्रकरणपूर्वार्धे (१२५) सर्गे व्याख्यात्रा आनन्दबोधेन्द्रसरस्वतीनाम्ना एवमुक्तम्—"तथा च द्रविडाचार्यैरप्युक्तम्—यद्यप्रमेयं ब्रह्म किमर्थं शास्त्रमिति चेत् सिद्धं तु निवर्तकत्वात्" इति ॥

परन्तु ब्रह्मनन्दिवाक्यमिदमिति इष्टसिद्धिग्रन्थात् तद्विवरणाच्च ज्ञायते । तथाहि—विमुक्तात्मकृतायां इष्टसिद्धौ (पुट-७२) "सिद्धन्तु निवर्तकत्वादिति चोक्तं वाक्यकारैः" इत्युक्तम् । ज्ञानोत्तमकृते इष्टसिद्धिविवरणे (पुट. ४४३) 'सिद्धं तत्त्वमस्यादिशास्त्रस्य प्रामाण्यं ब्रह्मात्मैक्याभासबुद्ध्युत्पादनेनाविद्यातत्कार्य-निवर्तकत्वात् । न तु संविज्जनकत्वात् इत्युक्तं ब्रह्मनन्दिभिरित्यर्थः ।' इति व्याख्यातम् ॥

आनन्दगिरिणा ज्ञानवासिष्ठव्याख्यात्रा च वाक्यकारब्रह्मनन्दिभाष्यकार-द्रविडाचार्यभेदाविवेचनेन उक्तमिति ज्ञायते । 'द्रविडोऽपि चे'ति तोटकाचार्य-पद्यादपि पूर्वार्धबलात 'निवर्तकत्वा'दिति सूत्रं द्रविडस्येति भ्रान्तिर्भवति । निवर्तकत्वं वाक्यकारोक्तं द्रविडः निदर्शनतः उपपादितवानिति तोटकपद्यस्य वास्तविकोऽर्थः ॥

पञ्चपादिकाविवरणेऽपि अष्टमवर्णके (पु-२३८) वाक्यमिदं स्वोक्तार्थे प्रमाणतया उक्तम्—'यदा एकमेव द्रव्यं भिन्नोपाधिपरिकल्पितभेदप्रतिभास-व्युदासेन प्रतिपाद्यते, तदा निवर्त्यविशेषादेव प्रामाण्यं, न प्रमेयविशेषात्। तदुक्तं—'सिद्धन्तु निवर्तकत्वा'दिति। इह तु कार्यकारणद्रव्यव्यतिरिक्तत्वे सति द्रव्याभिधायिपदयोः सामानाधिकरण्यं सोऽयमितिवत् एकस्य द्रव्यस्य उपाधिपरिकल्पितभेदव्युदासेन एकद्रव्यपर्यवसायीति अवगम्यते।' इति॥

तत्त्वदीपने इत्थमवतारितं—'नचैवं सति अपसिद्धान्तोऽपीत्याह—तदुक्तमिति' इति॥ अनेन तत्त्वदीपनवचनेन उक्तार्थे ब्रह्मनन्दिसंमत्या अपसिद्धान्तत्वनिरासात् ब्रह्मनन्दी अद्वैतसिद्धान्तप्रवर्तक इति ज्ञायते। पूर्वं भगवत्पादैः 'संप्रदायविदः' इत्युक्तत्वेन द्रविडाचार्याः अद्वैतसिद्धान्तसंप्रदायविदः इति ज्ञायते॥

खण्डनखण्डखाद्यव्याख्यायां खण्डनफक्किकाविभजनाख्यायां विद्यासागरीति प्रसिद्धायामानन्दपूर्णेनापि वाक्यमिदमुक्तं 'शास्त्रप्रामाण्यञ्चारोपितनिवर्तकत्वेन, आहच—'सिद्धं तु निवर्तकत्वा'दिति' इति॥

## (६) अद्वैतसिद्ध्यादौ ब्रह्मनन्दिवाक्यसमानार्थकात्यायनवाक्यनिर्देशः।

ननु मधुसूदनसरस्वतीभिः अद्वैतसिद्धौ अखण्डार्थवादे (पु-७०८) 'एवं तत्त्वमसीति वाक्यस्य सत्यादिवाक्यात् तत्पदाच्च प्रमेयावैलक्षण्येऽपि धर्मद्वयपरामर्शित्वेन भेदभ्रमनिवर्तकत्वात् प्रामाण्यम्। उक्तञ्च कात्यायनेन—'सिद्धन्तु निवर्तकत्वा'दिति' इत्युक्तम्॥

लघुचन्द्रिकायां—'धर्मद्वयेति। जीवत्वब्रह्मत्वेत्यर्थः। उक्तञ्चेति। शब्दानां नित्यत्वे सिद्धान्तिते, व्याकरणस्य ज्ञातज्ञापकत्वेन अप्रामाण्यमाशङ्क्य, मृजादिधातुना मृजन्तीत्यादेः साधुत्वनिश्चयसंभवेऽपि मार्ष्टीत्यादीनामसाधुत्व-भ्रमनिवर्तकत्वरूपप्रयोजनकत्वेन प्रामाण्यं सिद्धमेवेत्यर्थकं सिद्धन्त्वित्यादिकमुक्तं

वृद्धिसूत्रवार्तिके; तद्वत् ज्ञातज्ञापकत्वेऽपि भ्रमविशेषनिवृत्तिरूपप्रयोजनसत्वात् तत्त्वमस्यादिवाक्यप्रामाण्यमिति भावः'। इति व्याख्यातम् ॥

अद्वैतरत्नरक्षणेऽपि मधुसूदनसरस्वतीप्रणीते (पु-३७)—'नन्वेवं क्षेत्रज्ञेश्वरयोरत्यन्ताभेदे उपाधिभेदस्य च मिथ्यात्वे तत्कृतदुःखादिसंबन्धस्यापि मिथ्यात्वात् किन्निरासार्थं श्रवणमननादिकं स्यात्? नहि शशविषाणनिरासार्थं किमपि मृग्यते। तथा च तदनुष्ठानलक्षणक्रियाव्याघात इति चेन्न। अविद्यानिवृत्तेः प्रयोजनत्वात्। तदुक्तं कात्यायनेन व्याकरणवाक्यकारेण—'सिद्धन्तु निवर्तकत्वादिति।' इत्युक्तम्। एवञ्च सिद्धन्तु निवर्तकत्वादिति वाक्यं न ब्रह्मनन्दिनः। किन्तु व्याकरणवाक्यकारस्य वररुचेः, इति प्रतीयते इति चेत्। नैवम्। पूर्वोक्तमाण्डूक्योपनिषद्भाष्यानन्दगिरिव्याख्याज्ञानवासिष्ठव्याख्यानानुसारेण इष्टसिद्धितद्विवरणतत्त्वदीपनादिग्रन्थानुसारेण च ब्रह्मनन्दिकृतवाक्यग्रन्थस्थमेव सिद्धं त्वित्यादि वाक्यमिति अविप्रतिपन्नम्। परन्तु 'सिद्धन्तु नित्यशब्दत्वात्' 'किमर्थं शास्त्रमिति चेन्निवर्तकत्वात् सिद्धम्' इति कात्यायनेन वृद्धिसूत्रोपरि वार्तिकप्रणयनात्, 'सिद्धन्तु निवर्तकत्वात्' इति 'निवर्तकत्वात्सिद्धम्' इति च पदयोः पौर्वापर्यविपर्ययमात्रदर्शनेन पदयोर्वैलक्षण्यादर्शनात्, वाक्यकार इति ब्रह्मनन्दिवररुच्योः व्यवहारसाम्यात्, उभयत्र निवर्तकत्वेन प्रामाण्यस्य प्रतिपादितत्वात्, ब्रह्मनन्दिवाक्यसत्वेऽपि च तत्तुल्यार्थकं कात्यायनवाक्यमुदाहृतं सिद्धिचन्द्रिकयोरित्यवगन्तव्यम्॥ परन्तु निवर्तकत्वात् सिद्धमिति पठितव्यमिति भाति॥

किञ्च आत्मविषये निवर्तकत्वेन प्रामाण्यं ब्रह्मनन्दिवाक्य एवोक्तम्। कात्यायनवाक्ये तु शब्दविषये निवर्तकत्वेन प्रामाण्यमुक्तं, न त्वात्मविषये। अतः ब्रह्मनन्दिवाक्यमेव माण्डूक्योपनिषद्भाष्यादिषूक्तमिति बोध्यम्॥

## (७) छान्दोग्योपनिषद्भाष्यटीकादौ द्रविडाचार्यभाष्यपरामर्शः ।

भगवत्पादप्रणीते छान्दोग्योपनिषद्भाष्ये उपक्रमे, उक्तम्—‘ओमित्येतदक्षरमित्याद्यष्टाध्यायी छान्दोग्योपनिषत् । तस्याः संक्षेपतः अर्थजिज्ञासुभ्यः ऋजुविवरणमल्पग्रन्थं इदमारभ्यते’ इति ॥ तत्रानन्दगिरीये—‘ऋजु-पाठक्रमानुसारि । शारीरकसूत्रेषु छान्दोग्योपनिषदः भूयस्सु प्रदेशेषु विवृतत्वेऽपि तन्न पाठक्रमानुसारि । अथ पाठक्रममाश्रित्यापि द्राविडं भाष्यं प्रणीतं, तत्किमनेन इत्याशङ्क्याह अल्पग्रन्थमिति ।’ इति ग्रन्थेन छान्दोग्योपनिषदुपरि द्रविडाचार्येण भाष्यं प्रणीतमिति कथितम् ॥

तत्र साक्षाच्छान्दोग्योपनिषद्व्याख्यानरूपो न द्रविडाचार्यग्रन्थः । अपि तु छान्दोग्योपनिषद्विवरणरूपब्रह्मनन्दिग्रन्थस्य वाक्याभिधस्य विवरणरूपः भाष्याभिधः । अत एव संक्षेपशारीरकटीकायां मधुसूदनसरस्वतीकृतायामुक्तं—‘छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना’ इति, ‘ब्रह्मनन्दिविरचितवाक्यानां सूत्ररूपाणां भाष्यकर्ता द्रविडाचार्यः’ इति च ॥

नृसिंहाश्रमश्रीचरणटीकायामप्युक्तं—‘ब्रह्मनन्दिनापि छान्दोग्यषष्ठाध्यायव्याख्यानावसरे उक्तं’ इति, ‘छान्दोग्योपनिषद्भाष्यकारः’ ‘भाष्यकृद्द्रविडाचार्यवचनात्’ इति च । अत्र छान्दोग्योपनिषद्भाष्यमिति पदेन छान्दोग्योपनिषद्वाक्यभाष्यमित्यर्थः ग्राह्यः । एवमेव रामतीर्थटीकायां ‘ब्रह्मनन्दिनाप्याचार्येण छान्दोग्यभाष्ये उक्तम्’ इति, ‘नन्दिकृतग्रन्थभाष्यकारः द्रविडाचार्यः’ इति चोक्तम् ॥

रामानुजीयैरपि मुद्रिततत्त्वटीकादिव्याख्यानसहितरामानुजभाष्यपुस्तके टिप्पण्यां—‘भाष्यकारोऽत्र द्रमिडाचार्य इति व्याख्यातारः । ब्रह्मनन्दिकृतानां छान्दोग्योपनिषद्वाक्यानां भाष्यं द्रमिडाचार्यकृतमिति मीमांसापादुकापरित्राणे श्रीवरदनाथपादाः’ इति लिखितम् ॥

वाक्यग्रन्थः भाष्यग्रन्थश्च अद्वैतसंप्रदायमूलभूतः संप्रति न लभ्यते ॥ छान्दोग्यभाष्ये अल्पग्रन्थपदेन द्रविडभाष्यव्यावृत्तेरानन्दगिर्युक्तत्वेन तस्य बहुग्रन्थत्वाविष्करणात् 'द्राविडं भाष्यमतिसंक्षिप्त'मिति श्रुतप्रकाशिकाकारोक्तिः द्रमिडभाष्यादर्शननिबन्धनेत्यवसीयते ॥

## (८) छान्दोग्यभाष्ये द्रविडाचार्यवाक्यस्य स्थलद्वये निर्देशः ।

छान्दोग्यभाष्ये तृतीयाध्याये मधुविद्याविवरणे (पु–२४४) भगवत्पादैः 'पूर्वस्मात्पूर्वस्मात् द्विगुणोत्तरोत्तरेण कालेनेत्यपौराणं दर्शनम् । सवितुश्चतुर्दिशं इन्द्रयमवरुणसोमपुरीषु उदयास्तमयकालस्य तुल्यत्वं हि पौराणिकैरुक्तम् । मानसोत्तरस्य मूर्धनि मेरोः प्रदक्षिणावृत्तेस्तुल्यत्वादिति । अत्रोक्तः परिहार **आचार्यैः**' इत्यादिना **द्रविडाचार्याः** प्रमाणीकृताः ॥

आनन्दगिरीये च—'यद्यपि श्रुतिविरोधे स्मृतिरप्रमाणं ; तथापि यथा-कथञ्चित् विरोधपरिहारं द्रविडाचार्योक्तमुपपादयति—अत्रेति' । इत्यवतार्य, 'यदा अमरावती शून्या स्यात् तदा हि तां प्रति पुरस्तादुदेतीति प्रयोगशून्यत्वात् वसूनां भोगान्तः । एवमुत्तरासां पुरीणां विनाशे द्विगुणकालेन रुद्रादीनां भोगच्युतिः' इतीमां वचनव्यक्तिमाश्रित्य तमेव परिहारमाह—अमरावत्या-दीनामिति ।' इति उपरि द्राविडग्रन्थानुपूर्व्यपि प्रदर्शिता ॥

चतुर्थाध्याये संवर्गविद्यायां भाष्ये भगवत्पादाः द्रविडाचार्यं प्रमाणयन्ति-- 'ननु राजाऽसौ क्षत्तृसंबन्धात्, स ह क्षत्तारमुवाचेत्युक्तम् । विद्याग्रहणाय च ब्राह्मणसमीपोपगमात, शूद्रस्य चानधिकारात् । कथमिदमननुरूपं रैक्वेणोच्यते—हे शूद्रेति । तत्राहुराचार्याः—हंसवचनश्रवणात् शुगेनमाविवेश । तेनाऽसौ शुचा श्रुत्वा रैक्वस्य महिमानं आद्रवतीति ऋषिरात्मनः परोक्षज्ञतां दर्शयन् शूद्रेत्याहेति । शूद्रवद्वा धनेनैवैनं विद्याग्रहणाय उपजगाम । नच शुश्रूषया । न तु जात्यैव शूद्र इति । अपरे पुनराहुः—अल्पं धनमाहृतमिति रुषैवैनमुक्तवान्

शूद्रेति । लिङ्गञ्च बह्वाहरणे उपादानं घनस्येति ।' इति ॥ अत्रानन्दगिरीये यद्यपि 'एकीयमतोपन्यासेन परिहरति—तत्रेति ।' इत्यवतारितं, द्रविडाचार्येणोक्तमिति न कथितम्, तथापि मधुविद्यास्थले—'अत्रोक्तः परिहारः आचार्यैः' इतीव, अत्रापि 'तत्राहुराचार्याः' इत्युक्त्या तत्रैवात्रापि द्रविडाचार्यग्रन्थ इति ज्ञायते ।

## (९) शूद्रशब्दस्य नैरुक्तव्युत्पत्तिरेव द्रविडाचार्यसंमता ।

पूर्वोक्तद्रविडग्रन्थे च शूद्रशब्दस्य नैरुक्तव्युत्पत्तिः प्रथमं दर्शिता । पश्चात् शूद्रशब्दस्य गौणी वृत्तिर्दर्शिता ॥ अप्पय्यदीक्षितैः 'शुचमभिदुद्राव, शुचा वा अभिदुद्रुवे, शुचा वा रैक्वमभिदुद्राव इति शूद्रः' इति, सूत्रभाष्योक्तानर्थानभिप्रेत्य, 'शुचा दुद्रावेत्याद्यर्थेषु शूद्रशब्दस्य, रुजं द्रावयतीत्यर्थे रुद्रशब्दस्येव नैरुक्तप्रक्रियया निष्पत्तिः । उकारदैर्घ्यस्यापि तत एव सिद्धिः' इति परिमळे, 'संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम् ॥' इति वचनात् शोकाधिक्यद्योतको दीर्घ इति केचिदाहु'रिति न्यायरक्षामणौ च उक्तम् ॥

श्रुतप्रकाशिकायां—'शोचतीति हि शूद्रः, 'शुचेर्दश्च' इति रप्रत्यये धातोश्च दीर्घे, चकारस्य च दकारे शूद्र इति भवति । अतः शोचितृत्वमेवास्य शूद्रशब्दप्रयोगेण सूच्यते, न जातियोगः' इति रामानुजभाष्यव्याख्यासमये, 'रप्रत्ययः प्रकरणसिद्धः चकाराकृष्टः । 'अमितम्योर्दीर्घश्च' इति सूत्रे दीर्घश्चेत्यंशः अनुवर्तते इति भावः' इत्युक्त्वा, 'परैर्निरुक्तप्रक्रियया आद्रवणमप्यन्तर्भाव्य शूद्रशब्दनिर्वाहः कृतः । मुख्यनिर्वाहे संभवति सोऽनुपपन्न इति भावः । पाणिनीयनिर्वाहो मुख्यः । तदनन्तरमौणादिकः । ततो नैरुक्तः । तत्र औणादिकनिर्वाहस्य सम्भावितत्वात् स एवात्र कृतः । अनादरवाक्यश्रवणस्येव आद्रवणस्यापि शूद्रशब्दवाच्यत्वं न सूत्रविवक्षितम् । उपपादकतया उपादानस्य

द्वयोरपि तुल्यत्वात् । शुच एव ह्युपपाद्यत्वं प्रतीयते प्रथमान्तनिर्देशात् । श्रवणाद्रवणशब्दौ हि पञ्चम्यन्तौ । तस्मात् शोक एव शूद्रशब्दप्रवृत्तिनिमित्तम् ।' इति नैरुक्तव्युत्पत्तिः खण्डिता ॥

'तत्राहुराचार्याः' इत्यादिना भगवत्पादानूदितद्रविडाचार्यग्रन्थे 'आद्रवतीति शूद्रेत्याह' इति नैरुक्तव्युत्पत्तिप्रदर्शनविरुद्धं तत्खण्डनं सुदर्शनस्य स्वीयद्रविडाचार्यग्रन्थानुसारित्वप्रकटनं खण्डयति इति बोध्यम् ॥

वस्तुतस्तु छान्दोग्यश्रुतौ संवर्गविद्यायां द्रविडाचार्यसम्मता भगवत्पादाद्या-दृता नैरुक्तप्रक्रियया शूद्रशब्दस्य केवलयौगिकतया निष्पत्तिरेव समादर्तव्या; न तु औणादिकप्रक्रियया तन्निष्पत्तिः । यतः न्यायरक्षामणौ 'औणादिक-प्रत्ययान्ततायां शोचितृत्वार्थलाभेनापि न जात्यर्थत्वनिराससिद्धिः । औणादिक-प्रत्ययान्तानामव्युत्पन्नप्रातिपदिकत्वात् सर्वेषां नाम्नामौणादिकप्रत्ययान्तत्वेन जातिवाचिनश्शूद्रशब्दस्यापि तथात्वावश्यंभावात्' इत्युक्तम् ॥

किञ्च, शूद्रशब्दस्य औणादिकप्रक्रियया निर्वाहोऽपि न रामानुजभाष्य-श्रुतप्रकाशिकोक्तप्रकारेण कार्यः । किन्तु न्यायरक्षामणिशिवार्कमणिदीपिकाद्युक्त-रीत्या 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपी'त्यादिसूत्रतो रक्प्रत्ययेऽनुवर्तमाने 'शदेरूच' इत्यौणादिकसूत्रेण 'शद्लृशातने' इति धातोः रक्प्रत्ययेन धातो-रकारस्य ऊकारादेशेन च निष्पन्नः शूद्रशब्दः इत्यङ्गीकार्यम् ।

'केचित् उणादिसूत्रे रक्प्रकरणे 'शदेरूच' इतिसूत्रपाठमनङ्गीकृत्य तदनन्तरपठितात् 'अमितम्योर्दीर्घश्च' इति सूत्रादनन्तरं 'शुचेर्दश्च' इति सूत्रान्तरपाठं कल्पयन्तः तेन 'शुचशोके' इति धातोः निष्पादितोऽयं शूद्र-शब्दः केवलं शोचितृत्वार्थकः न तु शुचाद्रवणार्थकः औणादिकनिर्वाहे सम्भवति नैरुक्तनिर्वाहायोगात् । पाणिनीयनिर्वाहो मुख्यः । तत औणादिकः, ततो नैरुक्तः इति हि मर्यादेति वदन्ति । एवं शुद्धेषु सूत्रकोशेषु अदृष्टं वृत्तिग्रन्थेष्वव्याख्यातं पाठान्तरं कल्पयित्वा तथा व्युत्पादने, नास्माकं

कश्चिद्दोषः, तदाद्रवणादिति सूत्रभागस्य तद्व्याख्यानभाष्यस्य च वैदिकशूद्रपद-वाच्यार्थप्रतिपादनपरत्वं विहाय केवलं तत्सूच्यार्थप्रतिपादनपरत्वकल्पनोपपत्तेः' इत्यपि न्यायरक्षामणावेवोक्तम्। द्रविडाचार्याद्याद्दता नैरुक्तप्रक्रियैवाङ्गीकार्येति पूर्वमेवोक्तम् ॥

## (१०) सूत्रभाष्ये द्रविडाचार्यनिर्देशः।

सूत्रभाष्ये ज्योतिश्चरणाधिकरणे 'योऽपि तत्र 'यद्वै तद्ब्रह्म' इति ब्रह्मशब्दः, सोऽपि छन्दसः प्रकृतत्वात् छन्दोविषय एव। 'य एतामेवं ब्रह्मोपनिषदं वेद' इत्यत्र हि वेदोपनिषदमिति व्याचक्षते'। इति भगवत्पा-दैरुक्तम्। अत्र 'व्याचक्षते' इति निर्दिष्टाः द्रविडाचार्याः ॥

'य एता'मित्यादिवाक्यं छान्दोग्ये मधुविद्यागतं, तद्विवरणावसरे च द्रविडाचार्यैर्व्याख्यातमिति बोध्यम्।

## (११) भामत्यां द्रविडाचार्यवाक्यनिर्देशः।

भामत्यां समन्वयाधिकरणे (पु०-२६१) 'यथाऽऽहुर्द्रविडाचार्याः— 'संहरणाद्वा संवरणाद्वा स्वात्मीभावात् वायुस्संवर्गः' इति।' इति द्रविडाचार्याः प्रमाणीकृताः ॥

## (१२) कल्पतरौ ब्रह्मनन्दिवाक्यनिर्देशः।

भामत्यां प्रकृत्यधिकरणे (पु-४२१) उक्तं—'इयञ्च उपादानपरिणा-मादिभाषा न विकाराभिप्रायेण। अपितु यथा सर्पस्योपादानं रज्जुः, एवं ब्रह्म जगदुपादानं द्रष्टव्यम्। न खलु नित्यस्य निष्कलस्य ब्रह्मणः सर्वात्मना एकदे-शेन वा परिणामस्सम्भवति नित्यत्वादनेकदेशत्वादित्युक्तम्' इत्यादि ॥

तत्र कल्पतरौ ब्रह्मनन्दिनः वाक्यानि अद्वैतवादे प्रमाणभूतानि निर्दिष्टानि—'भास्करस्त्विह बभ्राम 'योनि'रिति 'परिणामा'दिति च सूत्र-

निर्देशात्, छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना 'परिणामस्तु स्यात्' इत्यभिधानाच्च परिणामवादो वृद्धसम्मत इति । तं प्रतिबोधयति—इयश्चेति। ब्रह्मनन्दिना हि—'नासतोऽनिष्पाद्यत्वात् प्रवृत्त्यानर्थक्यन्तु सत्त्वाविशेषात्' इति सदसत्पक्षप्रतिक्षेपेण पूर्वपक्षमादर्श्य, 'न संव्यवहारमात्रत्वात्' इति अनिर्वचनीयता सिद्धान्तिता । अतः 'परिणामस्तु' इति मिथ्यापरिणामाभिप्रायम्; सूत्रं त्वेतदभिप्रायमेवेत्यर्थः' इति ॥

तत्र परिमळे—'नासत इति। यदसत्तत्सर्वदैवासदिति न स्यान्निष्पाद्यत्वम् । यत्सत् तत्सर्वदा सदिति निष्पत्त्यर्थप्रवृत्त्यानर्थक्यम्' इति विवृतम् ॥

## (१३) भास्करभाष्ये ब्रह्मनन्दिद्रविडाचार्यनिर्देशः विशिष्टाद्वैतिनाभिमतवृत्तिकारबोधायनानिर्देशश्च ।

मुद्रितभास्करीयब्रह्मसूत्रभाष्ये 'आत्मकृतेः परिणामा'दिति सूत्रविवरणावसरे कल्पतर्वनूदितं भास्करभाष्यवाक्यमित्थं दृश्यते—'सूत्रकारः श्रुत्यनुकारी परिणामपक्षं सूत्रयांबभूव । अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्यां संप्रदायतः समाश्रितः । तथाच वाक्यं—'परिणामस्तु स्यात् दध्यादिवत्' इति । विगीतं विच्छिन्नमूलं माहायानिकबौद्धगन्धिनं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति' इति ।

अत्र वृत्तिकार इति भाष्यकारः द्रविडाचार्यः अभिप्रेतः । तेनैव छान्दोग्यवाक्यभाष्यकरणात् । न तु बोधायनः पराभिमतब्रह्मसूत्रवृत्तिकारः । तस्य छान्दोग्यसम्बन्धाभावात् । ब्रह्मसूत्रे च वाक्यकारभाष्यकारयोः ब्रह्मनन्दिद्रविडाचार्ययोः व्याख्यातृत्वसम्बन्धो नास्ति, यः रामानुजीयैर्घुष्यते, इत्यपि भास्करभाष्यादवगम्यते । तथा सति 'छान्दोग्ये वाक्यकारवृत्तिकाराभ्यां अयमेव (परिणामपक्षः) समाश्रितः' इति वाक्ये, छान्दोग्ये इति किमर्थं कथ्यते भास्करेण ? ब्रह्मसूत्र एव पूर्वोक्तसूत्रविवरणावसरे वाक्यकारवृत्तिकारयोः वचनं कुतो न

भास्करेण प्रदर्शितम् ? रामानुजदृष्टः बोधायनीयवृत्तिग्रन्थः तदीयविशिष्टाद्वैत-संप्रदायमूलत्वेनाभिमतः वाक्यकारभाष्यकारग्रन्थयोरपि मूलत्वेनाभिमतश्च रामानुजात्प्राचीनेन भास्करेण वाक्यकारादिग्रन्थप्रदर्शकेन कुतो न प्रदर्शितः स्वोक्तार्थे प्रमाणत्वेन। अतः बोधायनवृत्तिरेव शशशृङ्गायमाणेत्यपि सुव्यक्तं भास्करग्रन्थावलोकिनाम् ॥

## (१४) यामुनग्रन्थे द्रविडाचार्यस्य श्रीवत्साङ्कमिश्रकृत-ब्रह्मसूत्रवृत्तेश्च निर्देशः बोधायनवृत्तेरनिर्देशः।

आत्मसिद्धौ यामुनाचार्येण "यद्यपि भगवता बादरायणेन इदमर्थान्येव सूत्राणि प्रणीतानि। विवृतानि च तानि परिमितगम्भीरभाषिणा द्रमिडभाष्यकृता। विस्तृतानि च तानि गम्भीरन्यायसागरभाषिणा भगवता श्रीवत्साङ्कमिश्रेणापि। तथापि आचार्यटङ्कभर्तृप्रपञ्चभर्तृमित्रभर्तृहरिब्रह्मदत्तशंकरश्रीवत्साङ्क-भास्करादिविरचितसितासितविविधनिबन्धनश्रद्धाविप्रलब्धबुद्धयः न यथावत्, अन्यथा च प्रतिपद्यन्ते इति, तत्प्रतिपत्तये च युक्तः प्रकरणप्रक्रमः" इत्युक्तम्।

पूर्वोक्तयामुनाचार्यग्रन्थदर्शिनां द्रमिडभाष्यादेरपि मूलत्वेन पराभिमतः बोधायनीयवृत्तिग्रन्थः नैवाभूदिति स्पष्टं प्रतीयेत। तत्सत्त्वे, यामुनेन स्वसंप्रदाय-मूलभूतः स ग्रन्थः कुतो नोदाहृतः। अवश्योदाहरणीयो हि सः। प्रत्युत संक्षिप्त-द्रमिडभाष्यमूलकः विस्तृतः श्रीवत्साङ्कमिश्रकृतः ब्रह्मसूत्रवृत्तिग्रन्थः कश्चनाभूदिति यामुनग्रन्थादवगम्यते। लक्ष्मीपुराभिजनाः श्रीनिवासाचार्या अपि मैसूर्-महाराजसंस्कृतमहापाठशालापत्रिकायामेवं लिखन्ति—'ब्रह्मसूत्रभाष्यस्य तु (द्रमिडभाष्यस्य) विवरणं श्रीवत्साङ्कमिश्रेण प्रणीतम्। स एव विवरणकार इति व्यवहारगोचर' इति। तस्य च श्रीवत्सांकमिश्रस्य गम्भीरन्यायसागरभाषिणा भगवता इति यामुनेन विशेषणात् सः तदीयविशिष्टाद्वैतसिद्धान्तप्रवर्तकः तस्य पूज्यश्चेत्यवगम्यते।

## (१५) यामुनोक्तश्रीवत्साङ्कमिश्रवृत्तिस्थाने बोधायनवृत्तिमभिषिच्य तस्याः द्रविडभाष्यादेरपि मूलत्वेन रामानुजादिकल्पनम् ।

परंतु यामुनग्रन्थादनवगम्यमाना द्रमिडभाष्यस्यापि मूलभूता बोधायनीय-ब्रह्मसूत्रवृत्तिः काचिदभूदिति घुष्यते रामानुजसुदर्शनवेङ्कटनाथादिभिः स्वीयग्रन्थेषु, यामुनोक्ता द्रमिड़भाष्यमूलकत्वेनाभिमता वृत्तिः स्वयं तैः न व्यवह्रियते, यामुनेन श्रीवत्साङ्कमिश्रे वृत्तिकारे उक्तं भगवत्त्वं स्वयं कल्पिते बोधायने वृत्तिकारे कीर्त्यते, श्रीवत्सांकमिश्रवृत्तौ यामुनोक्तं विस्तृतत्वं स्वयं बोधायनीयाभिमतवृत्तौ घुष्यते, गम्भीरन्यायसागरभाषिणेति यामुनपुरस्कृतस्य श्रीवत्सांकमिश्रस्य स्वयं पुरस्कारो न क्रियते। रामानुजार्येण 'पूर्वाचार्यसुरक्षितां' इति, 'भगवद्बोधायन-कृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः, तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति चोक्तम्। श्रुतप्रकाशिकायां सुदर्शनेन 'परमर्षिप्रणीतानि व्याख्येयानि, तेषां च महर्षिप्रणीतानि व्याख्यानानि सन्ति चेत् तान्येवानुरोद्ध-व्यानि। नहि अनृषेस्सूक्ष्मदर्शित्वं, ऋषेरभिप्रायं ऋषिरेव च स्वतो वेदितुमर्हति। न तु जडमतिरितरो जनः' इति, 'भगवदिति भाष्य-स्थभगवच्छब्देन शङ्करादिवदनाप्तत्वं नास्तीत्यभिप्रेतम्' इति, (शंकरादि-भ्योऽप्याप्ततमत्वमभिप्रेतम् इति पाठान्तरम्।) 'पूर्वाचार्येति भाष्यस्थ-पूर्वशब्देन शंकराद्यर्वाचीनव्यावृत्तिः। सुरक्षितां-नोपदेशमात्रेण, ग्रन्थरूपेण चेति भावः' इति, 'भाष्ये बोधायनग्रहणेन पूर्वाचार्यशब्दोऽप्यर्थाद्विवृतः' 'स्वग्रन्थस्य सत्संप्रदायमूलकत्वमाह—पूर्वेति' इति चोक्तम्;

तत्त्वटीकायां वेङ्कटनाथेन 'अध्यात्मबोधातिशयपरभगवच्छब्देन शबर-शङ्करादिव्यावृत्तिः' 'पूर्वाचार्याः ब्रह्मनन्द्यादयः' 'पूर्वाचार्याः बौद्धजैनगन्धि-भ्योऽन्ये। औपदेशिकी रक्षा तदैव तत्रैव। ग्रान्थिकी तु कालान्तराद्यनुच्छेदात् सुरक्षोक्ता' इति, 'सुरक्षितत्वेऽपि त्यक्तसंप्रदायैः कुदृग्भिः क्षोभितत्वमाह—बहिति।' इति चोक्तम्। सर्वार्थसिद्धौ वेङ्कटनाथेन—'शिष्टाः बोधायनटङ्क-

द्रमिडादयः ' इत्युक्तम् ; तेनैव यतिराजसप्ततौ—' निराबाधा: बोधायनफणितिनिष्यन्दसुभगाः—यतिपतिनिबन्धाः ' इति, ' यतिपतेरादेशवैदेशिकैः—स च मुधा बाधाय बोधायनः ' इति चोक्तम् ; संकल्पसूर्योदयेऽपि तथैवोक्तम् ।

मूलभावप्रकाशिकायां रङ्गरामानुजेन ' भगवद्बोधायनवृत्तिसंग्रहात्मकटङ्कद्रमिडादिपूर्वाचार्यग्रन्थमूलकत्वेन स्वभाष्यस्य अतथाभूतशंकरभाष्यादिभ्यो वैलक्षण्यप्रदर्शनमुखेन स्वकृतिसाफल्यं प्रदर्शयति—भगवद्बोधायनेति । पूर्वाचार्यशब्देन बोधायनटङ्कद्रमिडादयो विवक्षिताः ' इत्युक्तम् । नयप्रकाशिकायां मेघनादारिसूरिणा ' बोधायनीयवृत्तेर्विस्तीर्णत्वात् टंकाद्याचार्यपरम्पराभिः संकुचितग्रन्थैः उपदेशपरम्पराभिश्च मिथ्यावादिप्रभृतिबहुमतिव्याघातेऽपि सुरक्षितत्वात् गूढां, द्रमिडाचार्यादिभिः सुरक्षितां, अप्रमादेन रक्षितां, प्रमादे हि सम्प्रदायविच्छेदः' इत्युक्तम् । एतत्सर्वमालोचयतां पूर्वोक्तयामुनग्रन्थदर्शिनां मध्यस्थानां प्रामाणिकानां सचेतसां चेतसि 'अभिनिवेशवशीकृतचेतसां बहुविदामपि सम्भवति भ्रमः' इति यामुनाचार्योक्तरीत्या परैः स्वीयसंप्रदायस्यार्षत्वकल्पनाभिनिवेशवशीकृतचेतोभिः यामुनोक्ता द्रमिडभाष्यमूलिका या श्रीवत्साङ्कमिश्रप्रणीता ब्रह्मसूत्रवत्तिः, तत्स्थाने बोधायनवृत्तिं परिकल्प्य, तस्या द्रमिडभाष्यमूलभूतत्वेन पौर्वापर्यविपर्ययमपि कल्पयित्वा ऐकमत्येन सङ्केतेन व्यवह्रियते इति, निगूढं परैः प्रच्छादितं वस्तुतत्वमवश्यं परिस्फुरेत् ।

## (१६) यामुनग्रन्थे ब्रह्मनन्दिनोऽनादरः रामानुजादिभिरादरश्च ।

किञ्च, आत्मसिद्धौ यद्यपीत्यादिपूर्वोक्तवचने, द्रमिडाचार्येण श्रीवत्सांकमिश्रेण च ब्रह्मसूत्राणि संक्षेपतः विस्तृततया च विवृतानि चेत् ,भवता किमर्थमयं ग्रन्थः क्रियत इत्याशङ्कां मनसि निधाय 'तथापि आचार्यटंकभर्तृप्रपञ्चादिविरचितसितासितविविधनिबन्धनश्रद्धाविप्रलब्धबुद्धीनां कृते मया अयं प्रकरणग्रन्थः क्रियते ' इत्युक्तम् । तेन टंकोऽपि यामुनेन अपरिग्राह्यत्वेन

स्पष्टमावेदितः। टंकः इति ब्रह्मनन्दी व्यवह्रियते इति श्रुतप्रकाशिकाकारेण वेङ्कटनाथेन च उक्तम्। तत्त्वटीकायां 'अत्र भाष्यकारः ब्रह्मनन्दिवाक्यव्याख्याता द्रविडाचार्यः' इत्यनेन द्रविडाचार्यव्याख्येयग्रन्थकर्ता टङ्काख्यः ब्रह्मनन्दी इत्यप्युक्तम्। वेदार्थसङ्ग्रहे च रामानुजार्येण 'भगवद्बोधायनटंकद्रमिडगुहदेवकपर्दिभारुचिप्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदवेदान्तव्याख्यानसुव्यक्तार्थ - श्रुतिनिकरनिदर्शितोऽयं पन्थाः' इति वाक्येन टङ्कस्य प्रामाणिकत्वमुक्तम्। तथाच टङ्काख्यः ब्रह्मनन्दी विशिष्टाद्वैतग्रन्थेषु प्रमाणिकत्वाप्रामाणिकत्वाभ्यां इतस्ततश्च आक्रान्तो दुरवस्थां प्राप्नोति इति प्रामाणिकाः परिशीलयन्तु॥

पूर्वनिर्दिष्टकल्पतरुग्रन्थात् ब्रह्मनन्दिनो विवर्तपक्षावलंबित्वावगमादेव यामुनाचार्येण स नाङ्गीकृतः। ब्रह्मनन्दिकृतच्छान्दोग्यवाक्यग्रन्थभाष्यकृत्त्वात् द्रविडाचार्योऽपि विवर्तपक्षावलंबी नाङ्गीकार्य एव यद्यपि यामुनाचार्यस्य, तथापि द्रविडाचार्यकृतवाक्यभाष्यग्रन्थो यामुनाचार्याणां न दृष्टिपथगोचरोऽभूत्, द्रमिडभाष्यमिति कश्चन ग्रन्थः श्रुतः, तत् कस्य ग्रन्थस्य भाष्यमित्यपि न ज्ञातं तैरिति तर्क्यते। ब्रह्मनन्दिकृतवाक्यग्रन्थमात्रं दृष्टं तैः, अत एव स नाङ्गीकृतः। स्वप्रदर्शितश्रीवत्साङ्कमिश्रकृतब्रह्मसूत्रवृत्तेः स्वीयमतानुसारिण्याः प्रामाणिकत्वप्रदर्शनार्थं, ब्रह्मविद्याचार्यत्वेन लोकप्रसिद्धेषु द्रविडाचार्येषु 'विवृतानि च तानि परिमितगंभीरभाषिणा द्रमिडभाष्यकृता, विस्तृतानि च तानि—श्रीवत्साङ्कमिश्रेण' इत्यादिना ग्रन्थेन श्रीवत्साङ्कमिश्रीयब्रह्मसूत्रवृत्तिमूलभूतसंक्षिप्तब्रह्मसूत्रभाष्यकृत्त्वमारोपितम्। द्रमिडभाष्यमिति यत् प्रसिद्धं नास्माभिर्दृष्टं तत् ब्रह्मसूत्रभाष्यमेव भवितुमर्हति, तत् दृष्ट्वैव च श्रीवत्सांकमिश्रः विस्तरेण भाष्यं प्रणीतवान् स्यादिति यामुनाचार्यैस्तर्कितम्। अत एव 'विवृतानि च तानि द्रविडाचार्येणेति वक्तव्ये, 'विवृतानि च तानि द्रमिडभाष्यकृता' इत्युक्तं यामुनाचार्यैः। एवमुक्तिश्च पूर्वमस्मदुक्तार्थं सूचयति। यामुनादर्वाचीनेन रामानुजार्येण द्रमिडभाष्यं वाक्यग्रन्थविवरणरूपं दृष्टवता स्वतन्त्रश्च द्रमिडग्रन्थमनवलोकयता ब्रह्मनन्दी

न परित्याज्यः तथासति द्रविडोऽपि परित्यक्तव्यस्स्यादिति मन्वानेन श्रीवत्सांक-मिश्रवृत्तिं प्रच्छाद्य तत्स्थाने बोधायनवृत्तिं तस्याः ब्रह्मनन्दिद्रविडाचार्य-ग्रन्थयोरपि मूलतां च आरोप्य स्वीयमतस्यार्षत्वं प्रकटीकृतं, सुदर्शनादयश्च तदनुसारेणैव पश्चात् व्यवहृतवन्तः। यामुनरामानुजादिग्रन्थपरस्परविरोधं सम्यक्परिशीलयतां करतलामलकवदस्मदुक्तार्थो भायादेव।

## (१७) यामुनग्रन्थे श्रीकण्ठाचार्याणां निर्देशः संभाव्यते।

किञ्च, आत्मसिद्धावेव पूर्वोक्तवचने अपरिग्राह्यसितासितनिबन्धनकर्तृमध्ये कश्चित् श्रीवत्साङ्कः परिगणितः। स च तत्रैव पूर्वं परिग्राह्यत्वेनोक्तात् मिश्रेण इति, भगवतेति, गम्भीरन्यायसागरभाषिणेति च विशेषितात् श्रीवत्साङ्कात् अन्य इत्यत्र न संशयः। स च क इति न ज्ञायते। 'श्रीवत्सांक' इत्यस्य स्थाने 'श्रीकण्ठ' इति शोधनं तत्र समुचितं प्रतिभाति। तथा सति 'शङ्कर-श्रीकण्ठभास्करादिविरचित' इति पाठः भवति। श्रीकण्ठाचार्यश्च ब्रह्मसूत्रभाष्य-कर्ता शैवः परेषां अपरिग्राह्यः प्रसिद्धः। तथाच तंत्र अप्रसिद्धापरिग्राह्यश्रीवत्साङ्क-परिग्रहापेक्षया प्रसिद्धापरिग्राह्यश्रीकण्ठपरिग्रहो न्याय्यः॥

## (१८) श्रीकण्ठाचार्यः भास्कराचार्यात् प्राचीनः।

'शङ्करश्रीकण्ठभास्कर' इति क्रमश्च सुष्ठु लगति। श्रीकण्ठाचार्येण शङ्कराचार्याः स्वीयभाष्ये निर्दिष्टाः इत्येतत्तद्भाष्यदर्शिनां स्फुटमिति नेह प्रतन्यते। तेन शङ्कराचार्यादनन्तरकालिकः श्रीकण्ठाचार्यः। भास्कराचार्येण च श्रीकण्ठाचार्यः स्वीयभाष्ये निर्दिष्टः। कुत्रेति चेदुच्यते—'अन्तर उपपत्ते'रित्यधिकरणे 'सुखविशिष्टाभिधानादेव च' इति सूत्रविवरणावसरे भास्कराचार्यभाष्यं— 'अत्रावसरे 'अत एव तद्ब्रह्मे'ति सूत्रमन्ये पठन्ति। तत्पुनर्गतार्थमिति अन्यै-र्नाधीयते' इति दृश्यते। तच्च सूत्रं श्रीकण्ठाचार्येण रामानुजार्येण च पठ्यते। भगवत्पादैर्न पठ्यते। तत्र सूत्रे च 'अत एव स ब्रह्म' 'अत एव च स ब्रह्म'

'अत एव च तद्ब्रह्म' इति पाठभेदो दृश्यतां न क्षतिः। रामानुजार्यात्प्राचीनः रामानुजखण्डितः भास्कराचार्यः न रामानुजार्यमनुवदितुं प्रभवति। परिशेषात् श्रीकण्ठाचार्यमेव भास्कराचार्या अनूदितवन्तः, इति वक्तुं युज्यते। यद्यपि निम्बार्काचार्यप्रणीतेऽपि भाष्ये तत्सूत्रं दृश्यते। तथाऽपि तद्भाष्यं न कस्यचिद्दर्शनभेदस्य आक्षेपसमाधिभ्यां व्यवस्थापकं अत्यन्तसंक्षिप्तं अधिकरणभेदस्यापि स्पष्टमप्रदर्शकं सूत्रपदार्थमात्रप्रदर्शकं भाष्यत्वेनैव परिगणनानर्हमिति तद्ग्रन्थदर्शिनां स्फुटम्। अतः तत्प्रदर्शको भवितुं नार्हति भास्करग्रन्थः। एवञ्च भास्करात्प्राचीनः श्रीकण्ठ इति ज्ञायते। अतः 'शंकरश्रीकण्ठभास्कर' इति क्रमोऽपि सुश्लिष्टो भवति। लेखकप्रमादाद्वा अन्यस्माद्वा कारणात् श्रीकण्ठ इत्यस्य स्थाने श्रीवत्साङ्क इति पतितम्। तत्परिमार्जनीयम्॥

### (१९) श्रीकण्ठाचार्यः रामानुजादिभ्यः प्राचीनः।

किञ्च, रामानुजार्यात् श्रीकण्ठाचार्यः प्राचीन इत्यत्र नाक्षेपावकाशः, यः भास्कराचार्येणानूदितः। तथाहि—रामानुजसुदर्शनवेङ्कटनाथादिभिः श्रीकण्ठमतं प्रतिक्षिप्तं, श्रुतप्रकाशिकायामुपक्रमे 'भाष्यस्थश्रीनिवासशब्दस्य रूढिशक्त्या त्रिमूर्तिसाम्यं, तदैक्यं, ब्रह्मणस्तदुत्तीर्णत्वं च निषिद्धम्। ईश्वर एव ब्रह्म, स त्रिमूर्त्यतिरिक्तः सदाशिवः; ब्रह्मादयः त्रयोऽप्यनीश्वराः, इति पक्षश्च व्युदस्तः' इत्युक्तम्। तत्र निषिद्धः अन्तिमपक्षश्च श्रीकण्ठाचार्यस्य। वेङ्कटनाथोऽपि स्वीयग्रन्थेषु सर्वत्र साग्रहं अमुं पक्षं 'आत्मैक्यं देवतैक्यं त्रिकसमधिकता तुल्यतैक्यं त्रयाणां अन्यत्रैश्वर्यमित्याद्यनिपुणफणितीरादियन्ते न सन्तः' इत्यादिना प्रतिक्षिपति॥

वेदार्थसंग्रहे 'तदेतन्निखिलजगन्निमित्तोपादानभूतात् 'जन्माद्यस्य यतः' 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादिसूत्रैः प्रतिपादितात्परस्माद्ब्रह्मणः परमपुरुषात् अन्यस्य कस्यचित् परतरत्वं 'परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्य'

इत्याशङ्क्य सूत्रकारः स्वयमेव निराकरोति' इति वाक्यस्य विवरणावसरे तात्पर्यदीपिकायां सुदर्शनसूरिणा उक्तम्—'अवैदिकप्रतिपत्तेः पर्वत्रयं दृश्यते—प्रकृतिरुपादानं रुद्रो निमित्तमित्येकं, नारायणकारणत्वे श्रुतिभिरुपपादिते, नारायण उपादानं रुद्रो निमित्तमित्येकं मतम्; तत्र निमित्तोपादानयोरैक्ये दर्शिते, जगत्कारणं मुक्तिदं, मुक्तप्राप्यमन्यत् परमस्तीत्येकं, तत्र पूर्वोक्तं मतद्वयं पूर्वमेव निरस्तम्। अथ कारणादन्यस्य प्राप्यत्वं निरस्यति—तदेतदिति' इति। तत्र निरस्तं नारायण उपादानं रुद्रो निमित्तमिति मतं श्रीकण्ठाचार्यहरदत्ताचार्यादीनां मतम्। श्रीकण्ठभाष्यदर्शिनां स्फुटमिदम्। हरदत्ताचार्यश्च तात्पर्यसंग्रहापराभिधश्रुतिसूक्तिमालायां—'विश्वाधिकस्त्वमसि विश्वमयं मुरारिः यज्ञेश्वरस्त्वमसि यज्ञममुं गृणन्ति। आद्या जगत्प्रकृतिरेष भवान्निमित्तमातः कथन्नु भगवन् युवयोरभेदः ॥' इत्याह ॥

लिङ्गभूयस्त्वाधिकरणे श्रुतप्रकाशिकायां उक्तं—'केचि'न्नारायणपरं ब्रह्मे'ति वाक्ये नारायणपरमिति पदं नारायणात्परमित्यन्तर्गतसमासं वदन्ति। तदयुक्तम्' इति। एवमेव वेदार्थसंग्रहतात्पर्यदीपिकायामप्युक्तं—'नारयणपरं ब्रह्मेत्यत्र नारायणात्परमिति केचिदवैदिका विदुः। तदयुक्तं,—महोपनिषदि नारायणः परं ब्रह्मेति पदविच्छेदेनाधीतत्वात्। 'तत्त्वं नारायणः परः' इत्यादिप्रकरणविरोधाच्च' इति। अत्रोभयत्र ग्रन्थे निरस्तः पक्षः श्रीकण्ठाचार्यस्य। श्रीकण्ठाचार्या हि अनुपपत्त्यधिकरणे स्वाभिमते, 'शब्दविशेषात्' इति सूत्रविवरणावसरे 'नारायणपरं ब्रह्मेति शब्दविशेष एव नारायणात्परमिति ब्रह्म प्रतिपादयति। अतो नारायणादन्यदेव परं ब्रह्मोपास्यं' इति व्याचक्षते। एवंच रामानुजादिभिः प्रतिक्षिप्तः श्रीकण्ठः ततः प्राचीन इत्यत्र नास्ति सन्देहलेशोऽपि प्रामाणिकानाम् ॥

## (२०) श्रीकण्ठाचार्याः रामानुजादीनां विशिष्टाद्वैतमार्गप्रदर्शकाः ।

किञ्च, श्रीकण्ठाचार्यैः प्रदर्शितमेव विशिष्टाद्वैतरूपं उपनिषद्व्याख्यानमार्गं रामानुजादयः सादरमभ्युपगच्छन्ति । ब्रह्मसूत्रार्थवर्णनमपि प्रायशः श्रीकण्ठ-प्रदर्शितमेव स्वीयग्रन्थेषु स्वीकुर्वन्ति । श्रीमदप्पय्यदीक्षितैरपि आनन्द-लहर्यामिदमुक्तं—'श्रीकण्ठाचार्यभाष्योक्त्यनुकृतिसरणिः क्वापि भाष्ये परेषां प्रायो दृष्टा विशिष्टाद्वयपरगुणितावर्णनादिप्रपञ्चे' इति । तद्व्याख्यायां चन्द्रिकायामपि तैरुक्तं—'आनन्दमयो ब्रह्म, तत्प्रतिष्ठारूपं ब्रह्मापि परिपूर्णा-नन्दरूपं ब्रह्मैव । अनन्यप्रतिष्ठत्वज्ञापनाय स्वस्य स्वप्रतिष्ठत्वोक्तिरिति विशिष्टा-द्वैतवादिभिर्वैष्णवैरुक्तम् । श्रीकण्ठाचार्यैरेव आनन्दमयो ब्रह्मतत्प्रतिष्ठारूप इति स पन्था दर्शितः' इति । 'तस्मात्किञ्चित्सारूप्यमात्रेण आचार्यभाष्यवत् (श्रीकण्ठा-चार्यभाष्यवत्) तदनुकरणेन प्रवृत्तस्य रामानुजभाष्यस्य शुद्धाद्वैते पर्यवसानमश-क्यमुपपादयितुम्' इति च । एवञ्च रामानुजादयः श्रीकण्ठभाष्यं सम्यक्परिशील्य स्वाभिमतं अंशं बहुधा स्वीकृत्य, स्वानभिमतं शिवपारम्यादिरूपं कञ्चन विषयं दूषयित्वा स्वीयं दर्शनं स्थापयामासुरिति तत्त्वपरामर्शिनां सिद्धान्तः ॥

## (२१) रामानुजादिभिः श्रीकण्ठाचार्यनामाग्रहणे बीजम् ।

ननु श्रीकण्ठाचार्यस्य स्वीयमार्गप्रदर्शकस्य नामापि कुतो न परैः स्वीयग्रन्थेषु निर्दिष्टम् ? स्वाभ्युपगतविषये प्रमाणतया वा, स्वानभ्यु-पगते स्वदूषिते विषये खण्डयतया वा श्रीकण्ठाचार्याणां नाम निर्दे-ष्टव्यं खलु इति चेत्, इदमेव रहस्यं नोद्घाटनार्हं, तन्नामनिर्देशे हि स्वीयसिद्धान्तः तदुपज्ञ इति तत्त्वं स्वेन प्रच्छादयितुमिष्टं जगति प्रथेत, बोधायन-महर्ष्युपज्ञ इति स्वीयोद्घोषणं मृषा भायात्, इत्याशयेनैव रामानुजार्यमारभ्य अद्यावधि सर्वैरपि वैष्णवैः श्रीकण्ठाचार्यनामाप्रकाश्यैव मूकीभूय स्थीयते । शिवार्क-मणिदीपिकासहितं श्रीकण्ठभाष्यं स्वकीयपुस्तककोशे विशिष्य संरक्ष्यते वैष्णवैः,

स्वीयसिद्धान्तमूलभूतत्वात्तस्य। शिवार्कमणिदीपिकाग्रन्थोऽपि कियत्यपि भागे तदीयकोशागारादेव महता प्रयासेन सम्पाद्य मुद्रापितः महनीयैः।

स्वसिद्धान्तस्य बोधायनमहर्ष्युपज्ञत्वममन्यमानेन यामुनाचार्येण परं 'शंकर-श्रीकण्ठभास्करादि' इति वस्तुसत्तदभिमतपाठरीत्या श्रीकण्ठनामोद्घाटितं स्वग्रन्थे। श्रीकण्ठनामोद्घाटनमसहमानेन यामुनादर्वाचीनेन रामानुजादिभि-शिक्षितेन केनचित् यामुनग्रन्थकोशेषु 'श्रीकण्ठ' इत्यस्य स्थाने 'श्रीवत्साङ्क' इति पदं प्रक्षिप्तम्। तदपरे तद्ग्रन्थपाठकाः तत्वमिति मन्वते। प्रक्षेपसंभवपरं भास्कराचार्यभाष्योक्तं किञ्चिद्वाक्यं स्मृतिपथमारोहति। 'अतिदुर्विदग्धेन केनापीदं वाक्यं प्रक्षिप्तमित्याशंकामहे' इति। आदिमेन रामानुजार्येण स्वीय-सिद्धान्तस्य बोधायनोपज्ञत्वाविष्करणात् पश्चात्तना अपि सर्वे तदेवोद्घोषयन्ति अद्यावधि, इत्यत्रापि विषये भास्कराचार्यभाष्योक्तः कश्चन श्लोकः स्मर्यते—'गता-नुगतिको लोको न लोकः पारमार्थिकः। पश्य लोकस्य मूर्खत्वं नाशितं ताम्र-भाजनम्॥' इति। 'सेतौ सैकतलिङ्गेन नष्टं मे ताम्रभाजनम्' इत्युत्तरार्ध-पाठः लोके प्रसिद्धः॥

## (२२) यामुनग्रन्थटिप्पणीकाराशयानवकाशः।

यदत्र श्रीमता उत्तमूर्ग्रामाभिजनेन वीरराघवाचार्येण यामुनाचार्यकृत-सिद्धित्रयटिप्पण्यां स्वकृतायां उक्तं—'अत्र भगवद्बोधायनानुक्तिः स्वयं तद्वृत्तेः साक्षाददृष्टत्वात्स्यात्; अत एव हि स्वयं सूत्रभाष्यं निबन्धुकामैरपि एभिः नूनं तत्सम्पादनार्थविलम्बेन स्वान्त्यसमये समापतिते, श्रीभगवद्रामानुजमुखेन तत्प्र-तीक्षितमासीत्। ते च स्वान्तेवासिश्रीकूरेशसहिताः उत्तरेषु क्वचित् कथंचित् बोधायनवृत्तिं समग्रां समीक्ष्य द्रमिडभाष्ये तदैकरस्यमनुभूय श्रीभाष्यं प्राणैषुरिति इतिवृत्तविदः। सूच्यते चेदमादौ श्रीभाष्ये 'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याःसंचिक्षिपुः। तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते'

इति, 'भगवता श्रीवत्साङ्कमिश्रेणेति पुरस्कृतान्मिश्रादन्य एव सितासितनिबन्धकारिपङ्क्तिनिविष्टः श्रीवत्साङ्क इति चिन्त्यते' इति च। स्वेनैव कृते टिप्पणपरिशिष्टे च उक्तं—'द्रमिडाचार्यः वाक्यस्योपरि भाष्यकर्ता । यस्य भाष्यस्य उपरि वामनटीकेति श्रुतप्रकाशिकातो ज्ञायते। टङ्कः प्रशंसितो यतिराजसप्ततौ—'निरातङ्काः टङ्कद्रमिडगुहदेवप्रभृतयः' इति । एवं वेदार्थसङ्ग्रहेऽपि भगवद्बोधायनटङ्कद्रमिडेत्यादि । एवंभूतस्य सितासितनिबन्धनकारिमध्यप्रवेशनमिह परममुख्यार्थेऽवैषम्येऽपि अन्यत्र अन्यथात्वादिना स्यात् । अत्राप्याचार्येति विशेषणेन टंकस्यांशतः प्रशंसापि स्यात् । तत्र सितनिबन्धनकारिणः केचित्, असितनिबन्धनकारिणश्चान्ये । इत्यप्यभिप्रयन्ति' इति ।

तत् पूर्वोक्तमूलकृद्यामुनाचार्याभिप्रायमननुसृत्यैव स्वीयैः प्रकाशितस्वसंप्रदायबोधायनोपज्ञत्वश्रद्धातन्मूलाभिनिवेशवशीकृतचेतस्त्वप्रयुक्तमिति प्रामाणिका अभिप्रयन्ति । तदीयेतिवृत्तविदुक्तरीत्या बोधायनवृत्तिसंपादनविलम्बेऽपि यामुनाचार्यस्य, स्वेनैवोक्तस्य परिमितगम्भीरभाषिद्रमिडभाष्यमूलकस्य गम्भीरन्यायसागरभाषिभगवच्छ्रीवत्साङ्कमिश्रप्रणीतविस्तृतब्रह्मसूत्रवृत्तिग्रन्थस्य स्वयं दर्शनसंभवेन, तद्दर्शनेन स्वाभिमतब्रह्मसूत्रार्थपरिज्ञानसम्भवेन च, सूत्रभाष्यं निबन्धुकामेन तेन कुतस्सूत्रभाष्यं न निबद्धम् ? किमर्थं स्वप्रशिष्येण वस्तुतः स्वकीयसिद्धित्रयादिग्रन्थमात्रदर्शनजनितविशिष्टाद्वैतसिद्धान्तप्रक्रियास्वरूपेण रामानुजार्येण सूत्रभाष्यस्य कर्तव्यतया प्रतीक्षणम् ?

'मानत्वं भगवन्मतस्य महतः पुंसस्तथा निर्णयः
तिस्रस्सिद्धय आत्मसंविदखिलाधीशानतत्त्वाश्रयाः ।
गीतार्थस्य च सङ्ग्रहः स्तुतियुगं श्रीश्रीशयोरित्यमून्
यद्ग्रन्थाननुसन्दधे यतिपतिस्तं यामुनेयं नुमः ॥'

इति गीतार्थसङ्ग्रहरक्षायां वेङ्कटनाथोक्त्या,

'यत्पादाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥'

इति गीताभाष्यमङ्गलस्य विवरणसमये 'परमाचार्यस्य सङ्ग्रहश्लोकनिर्माण-मुखेन तदर्थोपदेष्टृतां, तदनुवृत्तेः स्वाचार्यस्य सम्प्रीणनतामप्यनुसन्दधानः परमाचार्यभजनरूपं मङ्गलमाचरति' इति, 'द्रोणाचार्यस्य एकलव्य इव यामुनाचार्यस्याहमित्यभिप्रायेण ध्यानशब्दः' इति च, तात्पर्यचन्द्रिकायां वेङ्कटनाथोक्त्या च, रामानुजार्यः स्वीयसम्प्रदायं यामुनेयप्रबन्धमुखेनैव जग्राह, न गुरुमुखेन, अत एव रामानुजार्येण स्वग्रन्थेषु स्वीयसाक्षाद्गुरूणां पञ्चषाणां मध्ये केषांचिदपि वन्दनं न कृतमिति स्फुटम् ॥

यामुनग्रन्थे श्रीवत्साङ्कद्वयं न निर्दिष्टं, उत्तरः श्रीवत्साङ्काभिमतः श्रीकण्ठः इति पूर्वमेवोक्तम् । टंकापराभिधब्रह्मनन्दिनः यामुनेनापुरस्कारे च कारणं पूर्वमुक्तम् । तस्मात् टिप्पणीकारस्याशयविशेषप्रकाशोऽनवसरः ॥

## (२३) श्रीवत्साङ्कमिश्रवृत्तेरपि यामुनाचार्यादृष्टत्वाभ्यूहः ।

यामुनाचार्येण स्वनिर्दिष्टश्रीवत्साङ्कमिश्रवृत्तिग्रन्थोऽपि न दृष्टः इत्येवं ऊहितुं शक्यते । अत एव यामुनाचार्यः आगमप्रामाण्यनामके स्वीयनिबन्धे 'तदवसीयते अवैदिकमेवेदं पाञ्चरात्रस्मरणमिति, अत एव च भगवता बादरायणेन त्रयीमार्गप्रत्यनीकभूतकणभुगक्षचरणसुगतमतादिबाह्यसमयनिरासावसरे अस्य शास्त्रस्य निरासः—उत्पत्त्यसंभवादिति' इति पूर्वपक्षयित्वा, सिद्धान्तनिरूपणावसरे इत्थं लिलेख—'यत्तु भगवता बादरायणेन निरस्तत्त्वादिति । तदसत् । कथं हि भगवान् द्वैपायनः सकललोकादर्शभूतपरमभागवतः भागवतं शास्त्रं निरस्यतीत्युत्प्रेक्ष्येत । यः महाभारते भीष्मपर्वशान्तिपर्वादिषु पाञ्चरात्रप्रामाण्यमुक्तवान् ।

वेदान्तसारसर्वस्वमात्मीयं परमं मतम् ।
पञ्चरात्रं निराकुर्यात्कथं द्वैपायनः स्वयम् ॥

कथं तर्हीदं सूत्रं 'उत्पत्त्यसम्भवा'दिति ? तत्रैष सूत्रार्थः—पूर्वं स्वाभिप्रेत-समयपरिपन्थिकपिलकाश्यपसुगतजिनपशुपतिमतानां श्रुतिन्यायविरोधादसामंजस्यं प्रतिपाद्य, अधुना स्वाभिप्रेतपञ्चरात्रतन्त्राणामपि इतरसमयसमानपरिगणनात् बुद्धौ सन्निहितानां इतरसमयवदसामञ्जस्यमाशङ्क्य, प्रामाण्यं व्युत्पाद्यते । तत्राद्येन सूत्रद्वयेन पूर्वपक्ष उपक्षिप्यते । 'विज्ञानादिभावे वा तदप्रतिषेधः' इति वाशब्दात् पक्षो विपरिवर्तते ' इति । उपरि च यामुनः स्वयं सूत्राणां स्वाभिमतानर्थान् बहुधा अवर्णयत् । स्वाभिमतसूत्रार्थवर्णने स्वकपोलकल्पितत्वभ्रमापोहाय च, इत्थं द्रमिडभाष्ये उक्तम् , इत्थं भगवता श्रीवत्साङ्कमिश्रेण सूत्रार्थो वर्णितः इत्यादि च नोक्तवान् । एतेन ज्ञायते श्रीवत्साङ्कमिश्रादीनां ग्रन्थः स्वयं न दृष्टो यामुनाचार्येणेति । यदि दृष्टस्स्यात् कथं न प्रमाणीकुर्यात् ?

## (२४) यामुनग्रन्थावलोकनेनैव रामानुजीयभाष्यनिर्माणं न बोधायनवृत्त्यवलोकनेन ।

न्यायपरिशुद्धौ—' तदेतत् यामुनाचार्यैरागमप्रामाण्ये सम्भावितसमस्त-पूर्वपक्षयुक्तिनिराकरणेन प्रपञ्चितम् । तदनुसारेणैव भाष्यकारैः श्रीपाञ्चरात्राधि-करणं व्याख्यातम् ' इति वदन् वेङ्कटनाथः भाष्यकारेणापि बोधायनवृत्त्यनुसारेण पाञ्चरात्राधिकरणं न व्याख्यातं इति सूचयति । इत्थं स्थिते, यामुनस्य शशशृङ्गाय-माणबोधायनवृत्तिग्रन्थदर्शनाकाङ्क्षा, रामानुजमुखेन बोधायनवृत्तिनिरीक्षणपूर्वकं सूत्रभाष्यग्रन्थकरणप्रतीक्षणञ्च इत्यादिकमितिवृत्तविदां कल्पनासाम्राज्यमेव इत्यभि-मन्वते प्रामाणिकाः । अत्र विषये विश्वगुणादर्शकृतोक्तं ' विबुधानपि मोहमाव-हन्तो वितथैतिह्यसहस्रवर्णनेन ' इति पद्यं स्मृतिपथमारोहति ॥

## (२५) भास्करादिभाष्ये पाञ्चरात्राप्रामाण्यमेव समर्थितम् ।

रामानुजादिवदेव अनादिसंप्रदायानुल्लङ्घिनं ब्रह्मनन्दिद्रविडाख्यवाक्यकार-भाष्यकारसम्प्रदायमनुसृत्यैव सूत्रार्थवर्णयितारमात्मानं मन्यमानेन भास्कराचार्येण पाञ्चरात्राधिकरणे पाञ्चरात्राप्रामाण्यमेव समर्थितम् । एवं पाञ्चरात्राप्रामाण्यस्यैव सांप्रदायिकत्वे स्थिते, कथमयं यामुनाचार्यः रामानुजादयो वा सम्प्रदायोल्लङ्घनेन पाञ्चरात्रप्रामाण्यं सिद्धान्तयामासुः । संप्रदायानुसारित्वे वा कथं पाञ्चरात्राधिकरणसूत्रार्थवर्णने प्राचीनाचार्याणां वचनानि स्वदृष्टत्वेनाभिमतानि न प्रकाशयामासुः ॥

## (२६) श्रीवत्साङ्कमिश्रवृत्तिविरोधो यामुनग्रन्थस्य ।

वस्तुतस्तु यामुनः आत्मसिद्धौ स्वेन निर्दिष्टं गम्भीरन्यायसागरभाषिणा भगवता श्रीवत्साङ्कमिश्रेण कृतं विस्तृतं ब्रह्मसूत्रभाष्यं स्वेन परिमितगम्भीरभाषि-द्रमिडभाष्यकारकृतब्रह्मसूत्रविवरणमूलकत्वेनाभिमतं स्वप्रणीते आगमप्रामाण्य-नामकग्रन्थेऽपि निर्दिशति । तत्र हि 'पाञ्चरात्राधिकरणे आद्यसूत्रद्वयेन पूर्वपक्षं उपक्षिप्य, उत्तरसूत्रद्वयेन सिद्धान्तयति' इति उक्त्वा, सूत्राणां बहुधा अर्थं व्यावर्ण्य, 'एवञ्च—विरोधेऽपि विकल्पस्स्यात् भगवच्छास्त्रवेदयोः । विरोध एव नास्तीति प्रागेव प्रत्यपादयम् ॥' इत्युक्त्वा पाञ्चरात्रप्रामाण्यं समर्थयामास यामुनः । तदनन्तरं 'नन्वत्रभवतां भाष्यकाराणां विरुद्धांशाप्रामाण्याभिधानं कथमिव ? यद्यपि विरोधः कृत्वाचिन्तया परिहृतः, तथाऽपि गम्भीरन्यायसागर-मवगाढुमपरिवृढानां कोमलमनसां वेदानादरो माभूदित्येवंपरं, यथैव हि भगवतो जैमिनेः कर्मणः फलोपन्यासः कर्मश्रद्धासंवर्धनायेति ।' इति ग्रन्थेन शङ्कासमाधाने वक्ति यामुनः । तत्र भाष्यकारः क इति विचारणीयम् । आगम-प्रामाण्यग्रन्थं परिशोध्य सटिप्पणं मुद्रितवता काश्यामुषितवता पण्डितस्वामि-राममिश्रशास्त्रिणा विशिष्टाद्वैतसिद्धान्ताभिनिविष्टेन 'भाष्यकारपदेनेह द्रमिडाचार्योऽभिधित्सितः' इति टिप्पण्यामुक्तम् ॥

वस्तुतस्तु अत्र आगमप्रामाण्ये निर्दिष्टो भाष्यकारः यामुनेनैव आत्मसिद्धौ निर्दिष्टः श्रीवत्साङ्कमिश्र एव इति ज्ञायते। आत्मसिद्धौ श्रीवत्साङ्कमिश्रः भगवत्त्वेन गम्भीरन्यायसागरभाषित्वेन च निर्दिष्टः। अत्रापि 'अत्रभवतां भाष्यकाराणा'मिति 'गम्भीरन्यायसागरं (स्वभाषितं) अवगाढुमपरिवृडाना'मिति च वाक्येन, अत्रभवत्त्वेन गम्भीरन्यायसागरभाषित्वेन च निर्दिष्टः, स एव श्रीवत्साङ्कमिश्र इति प्रत्यभिज्ञायते। स च श्रीवत्साङ्कमिश्रः स्वीयब्रह्मसूत्रभाष्ये पाञ्चरात्राधिकरणे पाञ्चरात्राप्रामाण्यमेव भगवत्पादवत् सिद्धान्तितवानिति यामुनानुवादेन ज्ञायते। स्वमार्गदर्शिना स्वेनापि परमपूज्येन श्रीवत्साङ्कमिश्रेण पाञ्चरात्राप्रामाण्ये समर्थितेऽपि स्वयं तदुल्लङ्घनेन पाञ्चरात्रप्रामाण्यं समर्थितवान् यामुनः। स्वेन पाञ्चरात्राधिकरणे सूत्रचतुष्टयार्थत्वेन प्रतिपादिता विषयाः स्वकपोलकल्पिता एव, न स्वमूलभूतपूर्वाचार्यप्रतिपादिता इत्यपि स्फुटमत्र प्रतीयते॥

द्रमिडभाष्यकारः ब्रह्मसूत्रोपरि भाष्यं न कृतवानिति पूर्वमुक्तं न विस्मर्तव्यम्। छान्दोग्यवाक्यभाष्यकरणमात्रेण भूयस्सु प्रदेशेषु छान्दोग्यवाक्यविचारात्मकब्रह्मसूत्रार्थविवरणमार्गोऽपि तेन प्रदर्शित इत्येतावता परेषां स्वभाष्यस्य द्रमिड़भाष्यमूलकत्वोद्घोष इति वेदितव्यम्। पाञ्चरात्राधिकरणे वैष्णवविशिष्टाद्वैतिव्यतिरिक्तैस्सर्वैरपि भाष्यकारैः मध्वादिकतिपयभिन्नैः पाञ्चरात्रप्रामाण्यं न समर्थितं, अपितु श्रुतिविरुद्धांशे पाञ्चरात्राप्रामाण्यमेव समर्थितम्। अत एव वल्लभाचार्यब्रह्मसूत्रभाष्यप्रकाशे पुरुषोत्तमः एवं लिखति—'बहुषु भाष्येषु एवं व्याख्यानदर्शनेन (पाञ्चरात्राप्रामाण्यनिरूपणपरव्याख्यानदर्शनेन) प्राचीनवृत्तिष्वपि एतादृशव्याख्यानानुमानात्' इति॥

## (२७) बोधायनवृत्तिविषये तत्वचन्द्रिकाग्रन्थाशयानुवादः।

बोधायनवृत्तिविषये उमामहेश्वरशास्त्रिप्रणीततत्वचन्द्रिकायां प्रथमोल्लासे उक्तानि कानिचिद्वचनानि लिख्यन्ते—'ननु रामानुजभाष्ये बोधायनवृत्त्यनुसारेण

ब्रह्मसूत्राणि व्याख्यास्यन्त इत्युक्तम्। ततश्च तदीयं व्याख्यानमपि समूलत्वादुपादेयमेवेति चेन्न। बोधायनवृत्तेः द्वैतपरत्वे प्रमाणाभावात्। तव चानाप्तत्वात् त्वदीयवचनमात्रेण वृत्तेर्द्वैतपरत्वस्य निश्चेतुमशक्यत्वात्। किञ्च—यदि वृत्तिः द्वैतपरा स्यात् तर्हि भाष्यकारैः वृत्तिर्दूष्येत। नहि दूष्यते। न हि तद्दूषणमन्तरेण स्वभाष्यं प्रतिष्ठापितं भवति। भट्टभास्करस्य तत्कालमविद्यमानस्य भाष्यन्तु प्रतिपदं दूष्यते विवरणभामत्यादिग्रन्थेषु। बोधायनवृत्तिः आर्षी यदि स्वपक्षविरोधिनी स्यात् भामत्यादिषु वा कथं न दूष्येत। 'प्राणस्तथानुगमा'दित्यादिषु कचित्कचित् अर्थान्तरविषय एव वृत्तिः भाष्यादिषु दूष्यते, न तु द्वैतविषये। किञ्च इयमुत्सन्ना बौधायनी वृत्तिः। इदञ्च स्वेनैवोक्तं 'अतिविस्तीर्णां बोधायनस्य वृत्तिं पूर्वाचार्यास्संचिक्षिपु'रिति। नह्युत्सन्नायाः वृत्तेः मूलत्वकल्पनं प्रामाणिका बहुमन्यन्ते। यथोक्तं तन्त्रवार्तिके—'यदि तु प्रलीनशाखामूलता कल्प्येत ततस्सर्वासां बुद्धादिस्मृतीनामपि प्रामाण्यं प्रसज्येत। यस्यैव च यदभिप्रेतं स तत्तावत् प्रलीनशाखामस्तके निक्षिप्य प्रमाणीकुर्यात्।' इति। भवतु अनुत्सन्ना वृत्तिः तथापि नोपादेया। वेदान्तब्रह्मसूत्रतात्पर्यग्राहकमन्वादिस्मृतिशतविरोधस्य दर्शितत्वात्॥

किञ्च उपवर्षेण भगवता वृत्तिकृता सूत्राण्यद्वैतपरतया व्याख्यातानि। उपवर्षश्च वेदविदां पूज्यतमः। यथोक्तं शावरभाष्ये—'अथ गौरित्यत्र कश्शब्दः? गकारौकारविसर्जनीयाः इति भगवानुपवर्षः' इति। उक्तञ्च शारीरकभाष्ये शरीरातिरिक्तात्माधिकरणे—'अत एव भगवतोपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः' इति। इत्थं वेदविद्भिः भगवच्छब्देनोपात्तस्योपवर्षस्य आप्ततमत्वं सिद्धम्। तदीयवृत्तिविरुद्धा चेयं बोधायनवृत्तिरनुपादेया॥

इदं च सर्वमभ्युपेत्योक्तम्। बोधायनस्याद्वैतविरुद्धं व्याख्यानमेव गगनकुसुमं भाष्यकारैरदूषितत्वादिति प्रागुक्तम्। यत्तु श्रुतप्रकाशिकाकारस्य कल्पनं

'परेषामार्षव्याख्यानातिलङ्घित्वं 'उपासात्रैविध्यात्' 'सर्वत्र प्रसिद्धोपदेशात्' इत्यादिषु स्पष्टतर'मिति, तत् कुलटायाः पतिव्रतायां दोषारोपमनुकरोति। यच्च श्रुतप्रकाशिकाकारवचनं—'इह तु वृत्त्यनुसारः प्रतिज्ञातः। न च तत्प्रतिज्ञानमहृदयमिति शङ्कनीयं दुष्परिहरबाधकानुपलम्भा'दिति। तदेतत् मानवपुराणादिवेदोपब्रह्मणसहस्रभगवदुपवर्षवृत्त्यादिबाधकाज्ञानविजृम्भितम्' इति। अलमतिविस्तरेण। अस्मिन्प्रकरणे अवश्यविज्ञापनीयमन्यत् किञ्चिदस्ति, तदुक्त्वा प्रकृतमनुसरामः॥

## (२८) रामानुजमतचौर्यकृत् शैव इति वल्लभभाष्यटीकाकारोक्तेर्वैपरीत्यम्।

यामुनग्रन्थे श्रीकण्ठनामस्थाने श्रीवत्साङ्कनाम लिखितं केनचिद्दुर्विदग्धेनेति पूर्वमावेदितम्। रामानुजार्यात्प्राचीनः श्रीकण्ठाचार्य इति च बहुभिः प्रमाणैः पूर्वं स्थापितम्। इत्थं वस्तुतत्त्वे निगूढे स्थिते, वल्लभाचार्यप्रणीतब्रह्मसूत्रभाष्यव्याख्याता कश्चित् पुरुषोत्तमाभिधः स्वीयव्याख्यायां प्रकाशाख्यायां श्रीकण्ठाचार्यान् प्रति एवं लिखति—'शैवस्तु रामानुजमतस्यैव चोरः मध्वमतस्य च, क्वचित्क्वचित्तद्विरुद्धां शैवश्रुतिमुदाहरन् भिन्नं प्रस्थानमभिमन्यते' इति, 'शैवस्तु रामानुजमतस्यैव चोरः शैवीः श्रुतिस्मृतीरुपन्यस्य स्वमतं ततो भिनत्ति' इति, 'रामानुजमतचोरस्तु रामानुजाचार्यवदेव सूत्राणि व्याख्याय, शिवलोकस्य सर्वतः परत्वं परब्रह्मणः (वासुदेवस्य) शिवाकारत्वंच उक्तवान्' इति, 'रामानुजमतचोरस्तु तद्वदेव सूत्रं व्याख्याय विष्णुद्वेषात् 'ऋतं सत्यं परं ब्रह्म' इति महानारायणोपनिषन्मन्त्रं 'परात्परतरो ब्रह्म तत्परात्परतो हरिः। तत्परात्परतो हीशः' इति शिवसङ्कल्पसूक्तमन्त्रं, 'नारायणपरं ब्रह्म' इति च महोपनिषन्मन्त्रं, 'विश्वाधिको रुद्र' इति श्वेताश्वतरमन्त्रञ्चोपन्यस्य त्रिलोचननीलकण्ठत्वादिविशिष्टमुमया शबलितमेव परमेश्वररूपमुवाच' इति च। एवमेव पुरुषोत्तमः स्वप्रणीते वल्लभाचार्यभाष्यप्रकाशे आदित आरभ्य' आन्तं रामानुजा-

चार्याः मध्वाचार्याः इति बहुवचनान्तेन शब्देन इतराननुवदन्, श्रीकण्ठाचार्यान् परं एकवचनान्तेन शब्देन, नामनिर्देशं विना च शैव इत्येव चोर इति च वदन् स्वीयं शिवद्वेषमूलकं शैवद्वेषं प्रकटीकरोति। पुरुषोत्तममतानुसारी गिरिधरोऽपि शुद्धाद्वैतमार्तण्डे 'शैवोप्येतेन विध्वस्तो यतस्तच्चोर एव हि' इत्याह। एवमेवान्येऽपि तन्मतानुसारिणः वदन्ति। श्रीकण्ठाचार्यभाष्ये, रामानुजार्यप्रणीतवेदान्तसाराभिधे ग्रन्थे, तदीयभाष्यादिषु च प्रायशः वाक्यानि समानच्छायानि अर्थतश्शब्दतश्च एकाकाराणि दृश्यन्ते, तदिदं पश्यतः एकः अन्यग्रन्थं दृष्ट्वा लिखितवानिति भायादेव। तत्र कः कस्य चोरः इत्येव निर्धारणीयम्। अस्माभिः पूर्वोक्तैः प्रबलप्रमाणैः रामानुजार्यात्प्राचीनः श्रीकण्ठाचार्यः इति सिद्धान्तितत्वेन, श्रीकण्ठमतचौर्यकृद्रामानुजः इति, शिवद्वेषात् रामानुजः विष्णुपरत्वेन सूत्राणामर्थान्तरं उक्तवानिति च सिद्धौ, वस्तुतत्वमविगणय्यैव भ्रान्त्या पुरुषोत्तमः वैपरीत्येन लिलेख। तत्र च वैष्णवत्वप्रत्यासत्तिमूलको रामानुजाद्यभिमानः शिवद्वेषनिबन्धनश्शैवविद्वेषश्च मूलकारणमिति प्रामाणिकास्सर्वे एव जानीयुः। अथवा सोऽपि पुरुषोत्तमः परकीयाघोषणेन भ्रान्तस्स्यात्। यथा तथा वा स वदतु, नास्माकं काचिद्धानिः॥

## (२९) चिन्तामणिमहोदयविलिखितविषयपरामर्शः।

केचित् टि. आर्. चिन्तामणिप्रभृतयः 'सायणमाधवाचार्यप्रणीते सर्वदर्शनसङ्ग्रहे रामानुजदर्शनं संगृहीतं, श्रीकण्ठदर्शनं न सङ्गृहीतं; तत्र संगृहीते शैवदर्शनेऽपि श्रीकण्ठाचार्याः न कीर्तिताः, अतः सायणमाधवाचार्यात् पराचीनः श्रीकण्ठाचार्यः रामानुजार्यात्पराचीन इत्यत्र नाक्षेपावकाशः' इति युक्त्या पुरुषोत्तममतं रामानुजमतचौर्यकृत् श्रीकण्ठ इति वादं उपोद्बलयन्ति (Journal of Oriental Research—Volume 1 Page 67.) तान्प्रति ब्रूमः। सर्वदर्शनसङ्ग्रहे भास्करदर्शनमपि न सङ्गृहीतं, अतो भास्कराचार्योऽपि सायणमाधवाचार्यात् रामानुजार्याद्वा न प्राचीनः इति किमभ्युपेयते? यदि प्रबलप्रमाणैः

भास्कराचार्यः ताभ्यां प्राचीन इत्युपेयते, तदा पूर्वोक्तैरपि प्रबलप्रमाणैः सायण-माधवरामानुजार्याभ्यां भास्कराचार्याच्च प्राचीनः श्रीकण्ठाचार्य इत्यप्यकामैरप्य-भ्युपेयमेव, किं कुर्मः । माहेश्वरदर्शनेषु नकुलीशपाशुपतदर्शनं, शैवदर्शनं, प्रत्य-भिज्ञादर्शनं, रसेश्वरदर्शनं चेति दर्शनचतुष्टयं निरूपयन् सायणमाधवः, जीवाणुत्वं व्यपदिशतः श्रीकण्ठदर्शनस्य जीवविभुत्ववादिशैवदर्शनानन्तःपातं इतरमाहेश्वरदर्श-नानन्तःपातञ्चाकलयन्, तस्यापि निरूपणे माहेश्वरदर्शननिरूपणाधिक्यं वैष्णव-दर्शननिरूपणन्यूनतापत्तिञ्चालोचयन्, वैष्णवदर्शनमध्ये पूर्णप्रज्ञदर्शनस्य रामा-नुजदर्शनस्य च निरूपणे रामानुजीयविशिष्टाद्वैतसिद्धान्तमार्गप्रदर्शकश्रीकण्ठ-दर्शनमपि निरूपितप्रायं मन्वानः श्रीकण्ठदर्शनं न निरूपितवानिति युज्यते ॥

किंच 'सुदर्शनाचार्यैरपि तात्पर्यसङ्ग्रहे गरुडैक्यभावनादृष्टान्त एवोपात्तः, तदनुवर्तिनां श्रीकण्ठाचार्याणामपि तथैव मतमिति युक्तम्' इति अप्पय्यदीक्षितैः शिवाद्वैतनिर्णये उक्तरीत्या हरदत्ताचार्यापराभिधः सुदर्शनाचार्यः श्रीकण्ठाचार्यश्च एकमतानुवर्तिनाविति ज्ञायते । माधवीयशंकरदिग्विजये च हरदत्तः नीलण्ठा-पराभिधश्रीकण्ठशिष्य इत्युक्तम् । सर्वदर्शनसङ्ग्रहे च 'तदाह हरदत्ता-चार्यः' इति नकुलीशपाशुपतदर्शननिरूपणावसरे हरदत्ताचार्यः कीर्तितः । तथाच तद्गुरुः श्रीकण्ठाचार्योऽपि सर्वदर्शनसङ्ग्रहे कीर्तितप्राय इत्यप्यभ्यूहि-तुमवकाशोऽस्ति । माधवीयशङ्करदिग्विजये च श्रीकण्ठाचार्यः भगवत्पादैः वादे पराजित इत्युक्तं, तेन भगवत्पादसमकालिकः श्रीकण्ठाचार्यः इत्यूह्यते । यद्यपि प्राचीनाचार्यकालनिरूपणविषये नातीव प्रामाण्यं माधवीयशङ्करदिग्विजयग्रन्थस्य, बहुत्र विसंवाददर्शनात् । तथापि भगवत्पादैः रामानुजार्यः पराजितः इत्यनुक्त्वा श्रीकण्ठाचार्यः पराजित इति तत्रोक्तत्वेन 'रामानुजार्यात् श्रीकण्ठाचार्यः प्राचीनः' इत्यस्मिन्विषये निर्णयाजनकत्वेऽपि सम्भावनाबुद्धिजनकत्वं तद्ग्रन्थस्यास्तीत्यत्र नाक्षेपावकाशः । अथ प्रकृतं प्रस्तूयते ॥

## (३०) संक्षेपशारीरके ब्रह्मनन्दिद्रविडाचार्यनिर्देशः ।

संक्षेपशारीरके तृतीयपरिच्छेदे ब्रह्मनन्दिद्रविडाचार्यौ अद्वैतसम्प्रदाय-प्रवर्तकाविति तत्त्वं पञ्चभिः श्लोकैराविष्कृतम् । तथाहि—

आत्रेयवाक्यमपि संव्यवहारमात्रं
कार्यं समस्तमिति नः कथयाम्बभूव ।
सत्कार्यवादविषयो न हि दोषराशिः
मायामये भवितुमुत्सहते विरोधात् ॥ २१७ ॥

काणाददर्शनसमाश्रयदोषराशिः
दूरान्निरस्त इह संव्यवहारमात्रे ।
वेदान्तभूमिकुशलो मुनिरत्रिवंश्यः
तेनाह कार्यमिह संव्यवहारमात्रम् ॥ २१८ ॥

षष्ठप्रपाठकनिबद्धमुदीरितं यत्
तत्सत्यमेव खलु सत्यसमाश्रयत्वात् ।
तत्रैव यत्पुनरुवाच समुद्रफेन-
दृष्टान्तपूर्वकमदो व्यवहारदृष्ट्या ॥ २१९ ॥

पूर्वं विकारमुपवर्ण्य शनैश्शनैस्त-
द्दृष्टिं विसृज्य निकटं परिगृह्य तस्मात् ।
सर्वं विकारमथ संव्यवहारमात्र-
मद्वैतमेव परिरक्षति वाक्यकारः ॥ २२० ॥

अन्तर्गुणा भगवती परदेवतेति
प्रत्यग्गुणेति भगवानपि भाष्यकारः ।
आह स्म यत्तदिह निर्गुणवस्तुवादे
सङ्गच्छते न तु पुनस्सगुणप्रवादे ॥ २२१ ॥ इति ।

संक्षेपशारीरकस्यात्युत्तमप्रकरणग्रन्थस्य बह्व्यः टीकाः प्राचीनैः प्रणीता-स्सन्ति । तासु मधुसूदनसरस्वतीनृसिंहाश्रमरामतीर्थतच्छिष्याग्निचित्पुरुषोत्तम-मिश्रकृतटीकाः मुद्रिता उपलभ्यन्ते । मधुसूदनटीकानुसारेण श्लोकानां विवरणं लिख्यते—'छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना पूर्वपक्षे असतः सतश्चोत्पत्तौ दोषमुक्त्वा, सांव्यवहारिकमायामयत्वपक्षेण समाधानमुक्तं—'नासत उत्पत्ति-रनिष्पाद्यत्वात्' 'नापि सतः प्रवृत्त्यानर्थक्यात्' 'सत्वाविशेषात्' 'अभि-व्यक्त्यर्थमिति चेन्न तस्या अपि सत्त्वात्' 'प्रवृत्तिनित्यत्वाच्च सदाऽभिव्यक्ति-प्रसङ्गः' 'न संव्यवहारमात्रत्वात्' इति । तद्वचनञ्च उक्तन्यायोपोद्बलितवा-चारम्भणादिश्रुतिमूलकमवश्यमुपादेयमित्याशयेनाह—आत्रेयवाक्यमिति । (अत्रि-वंश्यः ब्रह्मनन्दी आत्रेयः तद्वाक्यम्)। अस्मिन्मते सत्कार्यवादोक्तदोषाप्रसक्तिं तावदुपपादयति—सत्कार्येति । (दोषराशिः—कारणव्यापारनैरर्थक्यं कार्यस्य सदा भावादिश्च दोषगणः) सद्विलक्षणत्वपक्षे सत्त्वनिबन्धनदोषराहित्यस्या-वश्यकत्वात्तद्विरोधात्तद्दोषाप्रसक्तिरित्यभिप्रेत्य विरोधादित्युक्तम् ॥

कार्ये असद्वैलक्षण्यस्याप्यङ्गीकारात् असत्कार्यवादपक्षोक्तदोषाणामप्यत्रा-प्रसक्तिमाह—काणादेति । सत्कार्यवादिभिः कार्यकारणयोरत्यन्तभेदानङ्गी-कारात् स वादः अद्वैतवादस्य ईषदासन्नः । तथापि तत्रत्या दोषा यदाऽत्र निरस्ताः, तदा दूरनिरस्ताः अत्यन्तभेदगर्भासत्कार्यवादगतदोषा इत्याशयेन दूरादित्युक्तम् । येनात्र सदसत्पक्षद्वयोक्तदोषासम्भवः, तेन (मुनिः) ब्रह्मनन्दी सिद्धान्तत्वेन कार्यत्वादि अनिर्वचनीयस्यैवाहेति प्रकृतं निगमयति वेदान्तेति ।

ननु ब्रह्मनन्दिना अनेकपक्षाणामुक्तत्वात् तत्र विवर्तपक्षादरणे को हेतुरित्याशङ्क्य, छान्दोग्यषष्ठप्रपाठकप्रमेयाद्वितीयसद्वस्तुसिद्धये, 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतिमुपजीव्य विवर्तवादस्य तेनोक्तत्वात्, स एव तदभिमतसिद्धान्त इति स एवादरणीय इत्यभिप्रेत्याह—षष्ठप्रपाठकेति। (सत्यसमाश्रयत्वात्—सत्यपरमात्मप्रतिपादनपरत्वात् षष्ठाध्याय-

5

विचारस्येत्यर्थः ।) ननु तत्रैव समुद्रफेनतरङ्गादिदृष्टान्तेन परिणामवादस्यापि तेनोक्तत्वात् कथं सोऽपि नादरणीय इत्याशङ्क्य, तेनैव सत्कार्यवादस्य उक्तरीत्या दूषितत्वात्, तद्वास्तवत्वं नाभिमतम्। किन्तु व्यवहारदृष्टिमाश्रित्याद्वैतसम्भावनार्थ-मित्याशयेनाह—तत्रैवेति । (यत्, परिणामलक्षणं कार्यं, अदः—तत्।)

ननु सर्वभेदरहितमुख्याद्वैतसंभावनाय विवर्तवाद एव सन्निहित इति स एव वर्णनीयः। न भेदसत्यत्वाविरोधी परिणामवादः व्यवहारदृष्टिपालनाय वर्णनीय इत्याशंक्य, अत्यन्तभेदसत्यत्वे अभिनिविष्टचित्तस्य प्रथमत एव विवर्तवादे प्रवेशो दुर्घट इति तदभिनिवेशत्याजनाय व्यवहारदृष्टिं रक्षता परिणा-मवादः प्रथमत उपपादितः। पश्चात् तद्दृष्टिमपि युक्त्यसहत्वेन शनैस्त्याजयित्वा ततोऽपि निकटं विवर्तवादमुपवर्ण्य शुद्धाद्वैतं रक्षति स्म ब्रह्मनन्दी। ततस्तस्य परिणामोक्तिरपि युक्तैव सूत्रकारस्येवेत्याशयेनाह—पूर्वं विकारमिति । विसृज्य, परित्यज्य, निकटं—मुख्याद्वैतसिद्धयेऽन्तरङ्गं सर्वमपि विकारं संव्यवहारमात्रमिति विवर्तवादम्। अथ—पश्चात्, परिगृह्य, सिद्धान्तत्वेनोररीकृत्य, अपवाददृष्टि-विषयं मुख्याद्वैतमेव सर्वानुपपत्तिपरिहारेण साधयतीत्यर्थः। ब्रह्मनन्दिविरचित-वाक्यानां सूत्ररूपाणां भाष्यकर्ता द्रविडाचार्योऽपि अद्वयब्रह्मणः प्रत्यगभेदः वाक्यकाराभिप्रेत इति कथयति स्म। ततो व्य(प्य)वसीयते ब्रह्मनन्दिनो विकारवादोऽनभिमत इत्याह—अन्तर्गुणेति । 'सेयं देवतैक्षत' इति श्रुतिमनु-सृत्य परदेवतेति ब्रह्मैवोच्यते। अन्तर्गुणेत्युक्तं विशदयति प्रत्यग्गुणेति । गुण-शब्दः स्वरूपपरः। अन्या देवताः पराग्रूपाः। परदेवता तु प्रत्यगात्मरूपा अपरोक्षचिदेकरसेत्यर्थः। निर्गुणवस्तुवादे, विकारादिसमस्तविशेषरहितं परमार्थतः आत्मवस्त्विति मते।) (प्रत्यग्ब्रह्मणोरत्यन्ताद्वैतवाद एव सङ्गच्छते। नतु सगुणब्रवादे विकारवाद इत्यर्थः।), सिद्धान्तसिद्धाञ्जनेऽपि 'अन्तर्गुणा भगवती परदेवतेति हि द्रमिडभाष्यमुदाहरन्ति' इति द्रमिडाचार्यवाक्यं संक्षेपशारीरकोक्तमेवानूदितम् ॥

## (३१) रामानुजभाष्ये सद्विद्यायास्सगुणपरत्वं ब्रह्मनन्दिद्रविडाचार्यसंमतमित्युक्तिः ।

इत्थं संक्षेपशारीरके वाक्यकारः द्रमिडभाष्यकारश्च छान्दोग्यषष्ठप्रपाठक-व्याख्यानावसरे अद्वैतवादमेव न्यरूपयदित्युक्तम्; रामानुजभाष्ये तु षष्ठ-प्रपाठकस्य सगुणपरत्वं ताभ्यामुक्तमित्युक्तम्—'वाक्यकारेण च सगुणस्यैव उपास्यत्वं विद्याविकल्पश्चोक्तः—'युक्तं तद्गुणकोपासनात्' इति । भाष्यकृता व्याख्या-तश्च—'यद्यपि सच्चित्तः' इत्यादिना' इति । अत्र श्रुतप्रकाशिका—'सूत्रकाराभिप्रायविदामुक्तिं दर्शयति—वाक्येति । युक्तं तद्गुणकोपासनादिति । युक्तं गुणयुक्तमेव प्राप्यम् । कुतः? तद्गुणकोपासनादित्यर्थः । विद्या-विकल्पश्च तत्रैव द्रष्टव्यः । सच्चित्तः सद्विद्यानिष्ठः' इति ।

## (३२) वेदार्थसंग्रहे सद्विद्यायास्सगुणपरत्वं ब्रह्मनन्दि-द्रविडाचार्यसंमतमित्युक्तिः ।

वेदार्थसङ्ग्रहेऽपि सद्विद्यायास्सगुणनिष्ठत्वं ताभ्यामुक्तमित्युक्तं रामा-नुजार्येण—'तत्त्वमसीति सद्विद्यायां उपास्यं ब्रह्म सगुणं, सगुणब्रह्मप्राप्तिश्च फलमित्यभियुक्तैः पूर्वाचार्यैर्व्याख्यातम् । यथोक्तं वाक्यकारेण—'युक्तं तद्गुण-कोपासनात्' इति । व्याख्यातञ्च द्रमिडाचार्येण विद्याविकल्पं वदता—'यद्यपि सच्चित्तो न निर्भुग्णदैवतं गुणगणं मनसाऽनुधावेत्, तथाप्यन्तर्गुणामेव देवतां भजते इति, तत्रापि सगुणैव देवता प्राप्यते' इति । सच्चित्तः—सद्विद्यानिष्ठः । न निर्भुग्णदैवतं गुणगणं मनसाऽनुधावेत्, अपहतपाप्मत्वादिकल्याणगुणगणं दैवताद्विभक्तं यद्यपि दहरविद्यानिष्ठ इव सच्चित्तो न स्मरेत्, तथाऽपि अन्तर्गुणामेव देवतां भजते, देवतास्वरूपानुबन्धित्वात् सकलकल्याणगुणगणस्य केनचित् परदेवताऽसाधारणेन निखिलजगत्कारणत्वादिना गुणेनोपास्यमानाऽपि देवता वस्तुतः स्वरूपानुबन्धिसर्वकल्याणगुणविशिष्टैवोपास्यते । अतः सगुणमेव ब्रह्म तत्रापि प्राप्यमिति सद्विद्यादहरविद्ययोर्विकल्प इत्यर्थः ।' इति ।

अत्र तात्पर्यदीपिका—'तत्त्वमसीति वाक्यं सगुणपरमित्याह—तत्त्व-मिति। पूर्वाचार्येषु वाक्यकारग्रन्थं दर्शयति—यथेति। युक्तमिति। सगुणस्यैव ब्रह्मणः उपासनेन सगुणमेव प्राप्यं युक्तमित्यर्थः। एतत्स्पष्टीकरणाय द्रविडा-चार्यग्रन्थं दर्शयति—व्याख्यातं चेति। यद्यपीत्यादिः द्रविडाचार्यग्रन्थः। तद्व्याचष्टे—सच्चित्त इति। अन्तर्गुणामिति पदस्य हेतुगर्भतां दर्शयन् वाक्यस्या-र्थमाह—देवतास्वरूपेति। प्रकृतसद्विद्याया असाधारणत्वात् निखिलजगत्कार-णत्वमुक्तं प्रतिविद्यं व्यवस्थितानां गुणानां प्रदर्शनार्थम्। आदिशब्देन सर्व-विद्यासाधारणानन्दत्वादयो विवक्षिताः। सर्वकल्याणगुणशब्देन निरूपित-स्वरूपस्य गुणा विवक्षिताः। दहरविद्यायां 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति दैवतात् पृथक् अपहतपाप्मत्वादिगुणजातं विभक्त-मुपास्यं विहितम्, एवं सद्विद्यायां देवतायाः पृथग्गुणजातमुपास्यत्वेन न विहितं, तथाऽपि जगत्कारणत्वादिकतिपयगुणविशिष्टत्वेनोपास्यमानं ब्रह्म स्वतोऽपरिमित-कल्याणगुणमिति सामान्येनापरिमितगुणत्वेनोपास्यमानत्वात् तस्या अपि प्राप्यं सगुणमेव ब्रह्मेत्यर्थः। आनन्त्यस्य सर्वविद्यासाधारणत्वात्, गुणतोऽप्यानं-न्त्यस्य तदन्तर्गतत्वात्। सामान्येनापरिमितगुणत्वं हि सर्वविद्यानुयायि। न चैतावता सर्वगुणानां निरूपकत्वं, अपरिमितानां स्वसंम्बन्धेन 'मङ्गलानाञ्च मङ्गलम्' इति प्रकारेण मङ्गलत्वापादनक्षमत्वस्य निरूपकत्वात्। एवं स्वोक्ता-र्थस्य स्वबुद्धिविलसितोत्प्रेक्षितत्वं व्यावर्तितम्।' इति॥

## (३३) सद्विद्याया निर्गुणपरत्वमेव ब्रह्मनन्दिद्रविडाचार्याभिमतमिति निर्धारणम्।

रामानुजभाष्ये वेदार्थसङ्ग्रहे च, उदाहृतवाक्यकारभाष्यकारवाक्यैः सद्विद्यायास्सगुणपरत्वं व्यवस्थाप्यते रामानुजार्येण। रामानुजव्यतिरिक्तेन श्रुत-प्रकाशिकाकारेण वा वेङ्कटनाथेन वा वाक्यग्रन्थः द्रविडाचार्यभाष्यग्रन्थश्च न दृष्ट इति सहेतुकं निरूपयिष्यते। रामानुजमात्रसाक्षिकेषु च इदानीमपरिदृश्य-

मानेषु पूर्वोक्तवाक्येषु विश्वासो नास्माकम् । रामानुजार्यस्य स्वकल्पितबोधायन-वृत्तिमूलकत्वेन स्वसंप्रदायमूलत्वेन च टङ्कद्रमिडवाक्यानामभिमतत्वेन स्वाभिप्रायानुगुणं द्रमिडाचार्यादिवाक्यानामन्यथाऽनुवादसम्भवात् । रामानुजोदाहृतानुपूर्व्यैव निर्दिष्टवाक्यसत्त्वेऽपि न विरोधः । तद्वाक्यानां सद्विद्यायास्सगुणपरत्वव्यवस्थापकत्वाभावात् । तथाहि—

संक्षेपशारीरके तट्टीकासु च पूर्वं 'अन्तर्गुणा देवता' इति भाष्यकारवाक्यघटकस्य अन्तर्गुणपदस्य प्रत्यग्गुणा इत्यर्थं इति, . गुणशब्दः स्वरूपपर इति, देवतापदस्य ब्रह्मरूपा परा देवता इत्यर्थ इति, तथाच प्रत्यगात्मरूपा परा देवता इति द्रविडाचार्यवाक्यार्थ इति कथितमित्युक्तम् । तथाच 'अन्तर्गुणामेव देवतां भजते' इत्यनेन द्रविडाचार्यवाक्येन प्रत्यग्ब्रह्मणोरभेदं तत्त्वमसिवाक्यार्थं विजानातीति अर्थो लब्धः । सद्विद्या निर्गुणविद्या दहरादिविद्या च सगुणविद्या, निर्गुणविद्या साक्षात्काररूपा प्रत्यगभिन्नब्रह्माभिव्यञ्जनेन अविद्यानिवृत्त्या सद्योमुक्तिहेतुः । सगुणविद्या च आभिमानिकसाक्षात्काररूपा अविद्यामनिवर्तयन्ती सगुणब्रह्मलोकगमनेन क्रममुक्तिहेतुरिति च भगवत्पादभाष्यादिषु विशदम् । तथाच नानयोर्विद्ययोः विकल्प इष्यते, फलभेदात् । एवञ्च यत् रामानुजभाष्ये 'वाक्यकारेण विद्याविकल्प उक्तः' इति, वेदार्थसङ्ग्रहे 'व्याख्यातञ्च द्रमिडाचार्येण विद्याविकल्पं वदता' इति चोक्तं, तदुभयमनुपपन्नम् । वाक्यकारस्य वा भाष्यकारस्य वा वाक्ये विकल्पबोधकशब्दाप्रदर्शनात् । विकल्पबोधकशब्दमप्रदर्श्यैव 'विद्याविकल्प उक्तः' इति, 'विद्याविकल्पं वदता' इति च उक्तिमात्रात् कथं विकल्पस्सिद्ध्येत् ।

श्रुतप्रकाशिकायां 'विद्याविकल्पश्च तत्रैव द्रष्टव्यः' इत्युक्तम् । श्रुतप्रकाशिकाकारेणापि न दृष्टं, अस्माभिरपि न द्रष्टुं शक्यते, वाक्यग्रन्थानुपलम्भात् । द्रविडभाष्येऽपि कुत्र विद्याविकल्प उदितः इति तात्पर्यदीपिकायां न प्रदर्शितम् । 'युक्तं तद्गुणकोपासनात्' इति वाक्यग्रन्थे युक्तमिति पदस्य श्रुतप्रकाशिकायां

गुणयुक्तमिति, तात्पर्यदीपिकायां उचितमिति च, एकेनैव सुदर्शनेन द्विधा व्याख्यानं कृतम्। तत्र युक्तमिति पदस्य उचितमित्यर्थ इत्येव युक्तम्। तद्गुणकोपासनादित्यस्य अन्तर्गुणकब्रह्मोपासनादित्यर्थः। 'अन्तर्गुणामेव देवतां भजत' इति भाष्यकृता तथैव व्याख्यानात्। एवञ्च अन्तर्गुणकोपासनात् प्रत्यग्रूपतया ब्रह्मविज्ञानात् प्रत्यग्गुणमेव ब्रह्म प्राप्यं युक्तमित्यर्थः। प्रतीचः ब्रह्माभेद आविर्भवतीत्यर्थः वाक्यग्रन्थस्य। तथा च 'वाक्यकारेण सगुणस्यैव उपास्यत्वमुक्त'मिति रामानुजभाष्यं, 'तत्त्वमसीति सद्विद्यायामुपास्यं ब्रह्म सगुणं सगुणब्रह्मप्राप्तिश्च फलमित्यभियुक्तैः पूर्वाचार्यैर्व्याख्यात'मिति वेदार्थसङ्ग्रहश्च निरस्तः। वाक्यकारेण प्रत्यगभिन्नब्रह्मज्ञानात् प्रत्यगभिन्नब्रह्मस्वरूपाविर्भावस्यैव कीर्तितत्वेन सगुणोपासनस्य सगुणप्राप्तेश्चाकथनात्॥

द्रमिडाचार्यैरपि तथैव व्याख्यातम्। तथाहि—रामानुजभाष्ये द्रविडाचार्यभाष्यवाक्यं सम्पूर्णतया नोक्तम्। अतः वेदार्थसङ्ग्रह एव उक्तं द्रमिडभाष्यवाक्यं आलोचनीयम्। तत्र लिखितस्य द्रमिडभाष्यवाक्यस्य चायमर्थः— 'यद्यपि सच्चित्तः न निर्भुग्णदैवतं गुणगणं मनसाऽनुधावेत्' सद्विद्यानिष्ठः देवतां ब्रह्माख्यां तस्याः गुणगणञ्च विभागेन भेदगर्भतादात्म्येन एतादृशगुणोपेता देवतेति न स्मरेत्। दहरविद्यादिष्विव सद्विद्यायां गुणानामनुपदेशात्। अनुपदिष्टानां गुणोपसंहारबोधकन्यायेनानुपसंहृतानाञ्च गुणानां चिन्तने प्रमाणाभावात्। जगत्कारणत्वादीनां ब्रह्मव्यतिरेकेण जगन्नास्ति, इति अद्वितीयब्रह्मप्रतिपादनायैव कीर्तनात्, तच्चिन्तने प्रमाणाभावात्। उपासनाविधायकशब्दस्य षष्ठप्रपाठकेऽभावात् उपासनातात्पर्याभावात्। 'तथाऽपि अन्तर्गुणामेव देवतां भजते' इत्यस्य प्रत्यगभिन्नं ब्रह्म विजानाति इत्यर्थः पूर्वमेव संक्षेपशारीरकादिवाक्यनिरूपणेन दर्शितः। 'इति तत्रापि सगुणैव देवता प्राप्यते' इति द्रविडभाष्यवाक्ये 'तद्गुणैव देवता' इति पाठः। परेण स्वीयमतस्य द्रमिडभाष्यारूढत्वख्यापनाय 'सगुणैव देवता' इति पाठः कल्पितः। 'तद्गुणैव देवता

प्राप्यते' इत्यस्य, पूर्वमन्तर्गुणा इति प्रक्रान्तत्वात् अन्तर्गुणैव देवता प्राप्यते इत्यर्थः। प्रत्यग्गुणब्रह्मज्ञानात् प्रत्यग्गुणब्रह्मप्राप्तिरुचितैव।

'तत्रापि' इत्यत्र अपिपदं परेण स्वाभिप्रायानुसारेण दहरादिविद्या-समुच्चयबोधनाय कल्पितम्। 'तत्र' इत्येव पाठः। सद्विद्यावान् सगुणं ब्रह्म न भजते किल, तस्य कथं सगुणब्रह्मप्राप्तिर्भवितुमर्हतीति यद्यपीत्याशङ्कितुराशयः। तथापीति समाधातुस्तु एवमाशयः—सगुणब्रह्मप्राप्तिर्मा भवतु क्रममुक्तिफला, सन्निष्ठस्य सगुणब्रह्मणोऽपि कल्पनाधिष्ठानतया ततोऽप्युत्कृष्टं अन्तर्गुणं प्रत्यगभिन्नं ब्रह्म भजतः श्रवणमनननिदिध्यासनपूर्वकं साक्षात्कुर्वतः तदेव प्रत्य-गभिन्नं ब्रह्म सर्वोत्कृष्टं प्राप्यते—इहैव लभ्यते। तत्र इत्यस्य तादृशभजनस्थले इत्यर्थः। सगुणं ब्रह्म न प्राप्यते इति क्लेशभाजं प्रति ततोऽधिकं निर्गुणमेव लभ्यते इति उत्साहातिशयः सम्पाद्यते भगवता द्रविडाचार्येण 'तथापि अन्तर्गुणामेव देवतां भजते इति, तत्र तद्गुणैव देवता प्राप्यते' इति एव-कारघटितवाक्येन। तथाच संक्षेपशारीरकादिग्रन्थदर्शितवर्त्मना वाक्यकार-भाष्यकारवाक्यानां न कोऽपि विरोधोऽद्वैतमते इति सुधियो विवेचयन्तु। सगुणब्रह्ममात्रवासनावासितानां निर्गुणब्रह्मप्रद्वेषिणां परेषां सगुणपरत्वेनैव क्लेशेन सद्विद्याप्रकरणगतवाक्यभाष्यग्रन्थयोः वास्तविकपाठप्रच्छादनेन पाठान्तर-कल्पनेन च कथञ्चिद्योजनन्तु तेषामेव तोषाय। सगुणब्रह्मणोऽप्यस्माभिरभ्यु-पगमात् यद्यपि नास्माकं सगुणयोजने द्वेषः, तथापि परमतात्पर्येण प्रत्यगभिन्नं निर्गुणं ब्रह्म प्रतिपादयत् सद्विद्याप्रकरणं विवर्तवादसमाश्रयणेन व्याचक्षतो वाक्यकारस्य तदनुसरिणो द्रविडाचार्यस्य च अद्वैतविद्याचार्यस्यानभिमतं पराभिमत-योजनमिति ब्रूमः॥

यत्तु सुदर्शनेनोच्यते—'एवं स्वोक्तार्थस्य स्वबुद्धिविलसितोत्प्रेक्षितत्वं व्यावर्तितम्' इति। तत् सौदर्शनं वाक्यमेव तदीयोक्तार्थानां स्वबुद्धिविलसि-तोत्प्रेक्षितत्वं स्वसंवेद्यमावेदयति॥

अत्रेदमवधेयम्—'अन्तर्गुणा भगवती परदेवतेति प्रत्यग्गुणेति भगवानपि भाष्यकारः। आह स्म' इति पूर्वोक्तसंक्षेपशारीरकश्लोकपर्यालोचनायां 'अन्तर्गुणां प्रत्यग्गुणामेव भगवतीं परदेवतां भजते' इति द्रविडाचार्यभाष्यग्रन्थपाठ इत्यवगम्यते स्पष्टमेव। रामानुजार्येण स्वमतानुगुण्याय तद्गुणेति पदस्य सगुणेति यथा विपर्यासः कृतः, तद्वदेव प्रत्यग्गुणेति पदं निष्कास्यैव द्रविडाचार्यग्रन्थमनूद्य अन्तर्गुणेत्यस्य स्वमतानुगुण्येन अन्योऽर्थः उक्तः। स चार्थः द्रविडाचार्यानभिमतः। यतः अन्तर्गुणेत्यस्य प्रत्यग्गुणेति द्रविडाचार्यैरेव व्याख्यानं कृतम्। गुणशब्दश्च स्वरूपपरः प्रत्यक्स्वरूपामित्यर्थः इति पूर्वमेवोक्तम्। यद्यपि गुणशब्दः धर्मपरः, तथापि प्रतीचः ब्रह्मधर्मत्वाभावात् स्वरूपार्थकमत्र गुणपदं नेयम्। स्वरूपलक्षणं तटस्थलक्षणमिति प्रयोगस्थले अत्यन्ताभिन्नस्यापि स्वरूपस्य कथञ्चिद्भेदकल्पनया लक्षणत्वव्यपदेशवत् ब्रह्मणस्सकाशादत्यन्ताभिन्नस्यापि प्रतीचः प्रत्यक् ब्रह्म इति शब्दभेदेन कथञ्चिद्भेदं परिकल्प्य ब्रह्मणः प्रत्यग्गुणत्वव्यपदेश इति संतोष्टव्यम्। 'आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते' इति पञ्चपादिकाचार्येण अत्यन्ताभेदेऽपि काल्पनिको धर्मधर्मिभावव्यपदेश उक्त एव। ब्रह्मस्वरूपभूतस्यापि प्रतीचः ज्ञानादेश्च विशेषणविशेष्यभावेन निर्देशमात्रात् गुणत्वव्यपदेश इति सिद्धान्तसिद्धाञ्जनेऽपि उक्तम्—'अवबोधादयो गुणा नित्या एवात्मन इति शौनकवचनं 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिविशेषणविशेष्यभावनिर्देशव्यपेक्षया नेयम्, 'अन्तर्गुणा भगवती परदेवते'ति हि द्रविडभाष्यमुदाहरन्ति।' इति। तथा च गुणपदं द्रविडाचार्यवाक्यस्थं स्वरूपार्थकमिति स्पष्टम्।

तथाच प्रत्यग्ब्रह्मणोरभेदबोधकद्रविडाचार्यग्रन्थस्य सद्विद्याप्रकरणगतस्य 'अन्तर्गुणां प्रत्यग्गुणामेव भगवतीं परदेवतां भजते' इत्येवमात्मकस्य विरुद्धमेव परकीयार्थवर्णनं सर्वमिति सिद्धम्।

किञ्च सूत्ररूपैर्वाक्यैः छान्दोग्योपनिषदं व्याचक्षाणो हि भगवान् ब्रह्मनन्दी षष्ठप्रपाठकविवरणावसरे 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मित्याद्यायाः अद्वितीयसद्वस्तुबोधकश्रुतेः द्वैतश्रुतेश्च मिथो विरोधमाशङ्क्य, तद्विरोधपरिहारायैव प्रवृत्तां 'वाचारंभणं विकारो नामधेय'मित्यादिघटकश्रुतिं षष्ठप्रपाठक एव स्थितां 'सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्। एतत्तु यत् संव्यवहारभूत'मित्यादिविष्णुपुराणादिवचनोपबृंहितामुपजीव्य, द्वैतस्य सदसत्त्वपक्षप्रतिक्षेपेण अनिर्वचनीयत्वस्थापकं विवर्तवादमवलंब्य 'न संव्यवहारमात्रत्वात्' इति वाक्येन संव्यवहारमात्रत्वमाचक्षाणः द्वैतसत्यत्ववादिनां विशिष्टाद्वैतिनां प्रतिकूलः। ते हि द्वैताद्वैतश्रुत्योः वस्तुतो विरोधपरिहाराय प्रवृत्तां वाचारंभणश्रुतिमुपेक्ष्य, अन्यपरां द्वैताद्वैतश्रुतिविरोधपरिहारार्थमप्रवृत्तां 'यस्य पृथिवी शरीर'मित्यादिकां शरीरशरीरिभावश्रुतिं तद्विरोधशमनीं घटकश्रुतिं मन्यमानाः तस्या माध्यस्थ्ये विश्वसन्ति। तत्रायमस्मदीयः श्लोकः—

'जीवं जगच्च परमस्य शरीरमाहुः कालं क्षिपन्ति च शरीरपरिष्कृतौ ते।
एतावता परिहृतं प्रथयन्ति लोके भेदाभिदाविषयवेदवचोविरोधम्॥' इति।

विशिष्टाद्वैतिनां शरीरशरीरिभावश्रुतिमाध्यस्थ्यावलंबनं वाचारंभणश्रुतिमाध्यस्थ्यावलंबनप्रवृत्तवाक्यकारानभिमतम्। अनुपपन्नं च। मध्यस्थो हि नाम लोके स भवति, यः मिथो विरुध्यतोर्मध्ये अन्यतरपक्षं न भजते उभयोश्च समः। शरीरशरीरभावश्रुतिर्हि शरीरशरीरिणोरान्तर्गणिकं मुख्यभेदमपरित्यजन्ती कथंचिद्विशिष्टरूपेणामुख्यमभेदमभ्युपगच्छन्ती द्वैतश्रुतिपक्षपातिनी अद्वैतश्रुतेरननुकूला च। अद्वैतश्रुतिर्हि नानारसत्वनिषेधेन ब्रह्मणः एकरसत्वमवगमयन्ती आन्तर्गणिकमपि भेदं न सहते। तथाच शरीरशरीरिभावश्रुतेः माध्यस्थ्यं न क्षोदक्षमम्। यथा हि वितथैतिह्यसहस्रवर्णनप्रवृत्तविशिष्टाद्वैतिनां ऐतिह्यविशेषे, द्वैताद्वैतवादिविवादे माध्यस्थ्यप्रवृत्तो वेङ्कटनाथः द्वैतवादं सिद्धान्तितवानित्येवंरूपे, वेङ्कटनाथस्य द्वैतपक्षपातिनः अद्वैतविद्वेषिणः माध्यस्थ्यं

सहृदयहृदयंगमं न, तद्वत्। वाचारंभणश्रुतिस्तु मुख्यमेव द्वैतमद्वैतं चाभ्युपगच्छन्ती तयोः व्यावहारिकत्वपारमार्थिकत्वाभ्यां द्वैताद्वैतश्रुत्योर्विरोधं शमयन्ती समीचीनं उभयसंमतं मध्यस्थकार्यं निर्वहन्ती शोभतेतमाम्। अतः वाचारंभणश्रुतिमाध्यस्थ्याभ्युपगन्तृब्रह्मनन्दिपक्षविरुद्धः शरीरशरीरिभावश्रुतिमाध्यस्थ्याभ्युपगन्तृविशिष्टाद्वैतिपक्षः इति सहृदयैस्समालोचनीयम्॥

## (३४) सगुणब्रह्मणो विग्रहादिनित्यत्वादौ वाक्यकारादिवाक्यप्रदर्शनं परकीयम्।

वेदार्थसङ्ग्रहे वाक्यकारद्रविडाचार्ययोर्वाक्यानि स्वकीयसगुणब्रह्मवादसिद्धान्तस्थापकप्रमाणत्वेन उदाहृतानि—'वाक्यकारश्च एतत्सर्वमाह—'हिरण्मयः पुरुषो दृश्यत इति प्राज्ञस्सर्वान्तरस्स्यात् लोककामेशोपदेशात्तथोदयात्पाप्मनाम्' इत्यादिना। तस्य च रूपस्यानित्यतादि वाक्यकारेणैव प्रतिषिद्धम्—'स्यात्तद्रूपं कृतकमनुग्रहार्थं तच्चेतनानामैश्वर्यात्' उपासितुरनुग्रहार्थः परमपुरुषस्य रूपसङ्ग्रह इति पूर्वपक्षं कृत्वा 'रूपं वाऽ(चा)तीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशात्' इति। यथा ज्ञानादयः परस्य ब्रह्मणः स्वरूपतया निर्देशात् स्वरूपभूतगुणाः तथेदमपि रूपं श्रुत्या स्वरूपतया निर्देशात् स्वरूपभूतमित्यर्थः।

भाष्यकारेणैतद्व्याख्यातं—"अञ्जसैव विश्वसृजो रूपं तत्तु न चक्षुषा ग्राह्यं मनसा त्वकलुषेण साधनान्तरवता गृह्यते, 'न चक्षुषा गृह्यते नापि वाचा' 'मनसा तु विशुद्धेन' इति श्रुतेः। न ह्यरूपाया देवताया रूपमुपदिश्यते। यथाभूतवादि हि शास्त्रम्। 'महारजनं वासः' 'वेदाहमेतं पुरुषं महान्तम्' आदित्यवर्णं तमसः परस्तात्' इति प्रकरणान्तरनिर्देशाच्च साक्षिणः' इत्यादिना।' इति॥

अत्र तात्पर्यदीपिकाटीका—'लोककामेशोपदेशात्। लोककामेशत्वोपदेशात्। वाक्यकारग्रन्थे रूपस्यानित्यत्वप्राकृतत्वशङ्काव्यावृत्त्यर्थमाह—तस्य चेति। पूर्वपक्षवाक्यमिदं 'स्याद्रूप'मित्यादि। 'रूपं वे'त्यादिसिद्धान्तवाक्यम्।

स्वरूपतया—स्वरूपनिरूपकधर्मतया स्वाभाविकत्वेनेत्यर्थः । अञ्जसा—अव्यवधानेन स्वाभाविकमित्यर्थः । ऐन्द्रजालिकवस्तुवत् मायाकृतमिति शङ्काव्यावृत्त्यर्थमाह—तत्तु इति । मिथ्याभूतं दुष्टेन्द्रियग्राह्यम्, अदुष्टकरणग्राह्यत्वश्रवणात् परमार्थभूतमित्यभिप्रायः । पारमार्थ्यमेवोपपादयति—नहीति । अरूपाया रूपोपदेशः कथं नेत्यत्राह—यथाभूतवादीति ।' इति । अञ्जसैवेत्यादिद्रमिडभाष्यवाक्यं तत्त्वटीकायामप्यनूदितम् ॥

वेदार्थसङ्ग्रहे वाक्यकारवचनं—'हिरण्मय इति रूपसामान्याच्चन्द्रमुखवत्' इति । भाष्यकारवचनं—'न मयडत्र विकारमादाय प्रयुज्यते अनारभ्यत्वादात्मनः' इति । अत्र तात्पर्यदीपिका—'हिरण्मय इति विकारवाचिशब्दश्रवणात् कृतकं रूपमिति शङ्काव्यावृत्त्यर्थं वाक्यमाह—हिरण्मय इति । रूपं-औज्ज्वल्यम् । तस्य भाष्यग्रन्थमाह—न मयडत्रेति । विकारमादाय—विकारार्थमङ्गीकृत्य । अनारभ्यत्वादात्मन इति । विग्रहविशिष्टस्यात्मनोऽनारभ्यत्वादित्यर्थः' इति । वेदार्थसङ्ग्रहे—'यथा ज्ञानादिकल्याणानन्त्यनिर्देशात् अपरिमितकल्याणगुणविशिष्टं परं ब्रह्मेत्यवगम्यते, एवं 'आदित्यवर्णं पुरुष'मित्यादिनिर्देशात् स्वाभिमतस्वानुरूपकल्याणतमरूपः परब्रह्मभूतः पुरुषोत्तमो नारायण इति ज्ञायते । तथा 'अस्येशाना जगतो विष्णुपत्नी' 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' 'सदा पश्यन्ति सूरयः' 'तमसः परस्तात्' 'क्षयन्तमस्य रजसः पराके' इत्यादिना पत्नीपरिजनस्थानादीनां निर्देशादेव तथैव सन्तीत्यवगम्यते । यथाऽऽह भाष्यकारः—'यथाभूतवादि हि शास्त्रम्' इति ।' इति । अत्र तात्पर्यदीपिका—'एवं वाक्यकारभाष्यकारग्रन्थयोः दिव्यरूपसमर्थनं पत्नीपरिजनादेरपि प्रदर्शनार्थं तुल्यन्यायादित्यभिप्रेत्याह—तथेति । कथं तथाऽवगतमित्यत्राह—यथेति' इति । सर्वार्थसिद्धिव्याख्यासहिते तत्त्वमुक्ताकलापेऽपि वेङ्कटनाथेन 'वाक्यभाष्यादि चैवम् । अत्र ब्रह्मनन्द्यादिसम्प्रदायमाह—वाक्येति' इत्यादिना परस्य विग्रहनित्यत्वे वाक्यभाष्यग्रन्थौ प्रमाणतया कीर्तितौ ॥

## (३५) सगुणब्रह्मणो विग्रहादिनित्यत्वादौ वाक्यभाष्यग्रन्थयोर्न तात्पर्यम् भगवत्पादैरपि विग्रहाद्यभ्युपगमः ।

अत्रोच्यते—प्रथमत इदमवश्यमवगन्तव्यं प्रस्पष्टद्वैतिभिः मध्वादिभिः, प्रच्छन्नद्वैतिभिः रामानुजादिभिश्च, यद्भगवत्पादानां निर्गुणब्रह्मनिष्ठानामपि सगुणं ब्रह्म नानभिमतं इति । 'द्विरूपं हि ब्रह्मावगम्यते नामरूपविकारभेदोपाधिविशिष्टं तद्विपरीतञ्च सर्वोपाधिविवर्जितम्' 'सहस्रशो विद्याऽविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वाक्यानि' 'एकमपि ब्रह्मापेक्षितोपाधिसंबन्धं निरस्तोपाधिसंबन्धं च उपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यते' इत्यानन्दमयाधिकरणे, 'परमार्थावस्थायां ईशित्रीशितव्यादिसर्वव्यवहाराभावं वदन्ति वेदान्तास्सर्वे । व्यवहारावस्थायान्तूक्तः श्रुतावपीश्वरादिव्यवहारः—'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः एषां लोकानामसंभेदाय' इति आरम्भणाधिकरणे, 'किं द्वे ब्रह्मणी परमपरं चेति ? बाढं द्वे 'एतद्वै सत्यकाम परं चापरंच ब्रह्म यदोंकारः' इत्यादिदर्शनात् । किं पुनः परं किमपरमिति ? उच्यते—यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधादस्थूलादिशब्दैः ब्रह्मोपदिश्यते तत्परम् । तदेव यत्र नामरूपादिविशेषेण केनचिद्विशिष्टमुपासनायोपदिश्यते 'मनोमयः प्राणशरीरो भारूपः' इत्यादिशब्दैस्तदपरम्' इति कार्याधिकरणे च, द्विविधं ब्रह्म वेदान्तेषूपदिश्यते इति निर्धारितं भगवत्पादैः ॥

सविशेषब्रह्मरूपस्य च अपारमार्थिकत्वेऽपि नासत्त्वं प्रातिभासिकत्वं वा । किन्तु व्यावहारिकत्वमित्यपि 'स्यात्परमेश्वरस्यापि इच्छावशात् मायामयं रूपं साधकानुग्रहार्थम्' इति अन्तस्तद्धर्माधिकरणे, 'ध्यानार्थेऽपि सत्यकामादिगुणोपदेशो तद्गुण ईश्वरः प्रसिद्ध्यति' इति व्यतिहाराधिकरणे च निर्धारितम् । 'स्वाप्ययसंपत्त्योः' इत्यादिसूत्रभाष्ये 'सगुणविद्याविपाकावस्थानं त्वेतत् स्वर्गादिवदवस्थान्तरं ; यत्रैतदैश्वर्यमुपवर्ण्यते' इति वदद्भिर्भगवत्पादैः वैकुण्ठस्थानादिकमभ्युपगतमेव ॥

बृहदारण्यकोपनिषद्भाष्येऽपि प्रथमाध्यायतृतीयब्राह्मणविवरणावसरे 'न चोपासनार्थश्रुतशब्दोत्थविज्ञानविषयस्यायथार्थत्वे प्रमाणमस्ति। न च तद्विज्ञानस्यापवादः श्रूयते। ततः श्रेयःप्राप्तिदर्शनाद्यथार्थतां प्रतिपद्यामहे। तस्माद्यथाभूतानेवात्मेश्वरदेवतादीन् ग्राहयत्युपासनार्थं शास्त्रम्। एतेन प्रतिमाब्राह्मणादिषु विष्ण्वादिदेवपित्रादिबुद्धीनाञ्च सत्यवस्तुविषयत्वसिद्धिः। यथाच दर्शपूर्णमासादिक्रिया इदंफला विशिष्टेतिकर्तव्यताका एवं क्रमप्रयुक्ताङ्गा चेत्येतदलौकिकं वस्तु प्रत्यक्षाद्यविषयं तथाभूतञ्च वेदवाक्यैरेव ज्ञाप्यते, तथा परमात्मेश्वरदेवतादिवस्तु अस्थूलादिधर्मकं अशनायाद्यतीतं चेत्येवमादिविशिष्टमिति वेदवाक्यैरेव ज्ञाप्यत इति अलौकिकत्वात् तथाभूतमेव भवितुमर्हति' इत्यादीनि वाक्यानि सगुणब्रह्मविषये भगवत्पादाशयं स्पष्टयन्ति॥

एतादृशभगवत्पादसिद्धान्तपरिज्ञानवतां रामानुजप्रदर्शितवाक्यकारद्रमिडभाष्यकारवचनानि न विरोधबुद्धिं जनयेयुः। प्रत्युत भगवत्पादवाक्यानां वाक्यकारभाष्यकारवाक्यैस्सह सामरस्यमेव प्रकाशेत। 'स्यात्तद्रूपं कृतकमनुग्रहार्थं तच्चेतनानामैश्वर्यात्' इतीदं हि वाक्यकारवाक्यं 'स्यात्परमेश्वरस्यापि इच्छावशात् मायामयं रूपं साधकानुग्रहार्थम्' इति भगवत्पादवाक्यस्य मूलभूतम्। छान्दोग्यभाष्यकर्तारो हि भगवत्पादाः ब्रह्मनन्दिविरचितछान्दोग्यविवरणवाक्यानि तेषां द्रमिडाचार्यप्रणीतभाष्यं च दृष्ट्वैव भाष्यं रचयामासुः न सम्प्रदायोल्लङ्घनेन। 'अत्राहुराचार्या' इत्यादिना हि द्रमिडाचार्यभाष्यसम्मतिं पुनः पुनः प्रदर्शयामासुरिति पूर्वमेव प्रदर्शितम्। नत्वविद्यमानानि बोधायनादिवृत्तिवाक्यानि परवत्प्रमाणीकुर्वन्ति। यत्तु परेण 'स्यात्तद्रूपमि'त्यादिवाक्यकारवाक्यं पूर्वपक्षवाक्यं 'रूपं वातीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशात्' इति सिद्धान्तवाक्यमिति कल्पितम्, तत्परं अनुपपन्नम्। 'रूपं वाऽतीन्द्रिय'मिति सिद्धान्तत्वाभिमतवाक्ये अकृतकत्वबोधकशब्दाभावात्। 'रूपञ्चातीन्द्रिय'मित्येव पाठः, वाकारः परेण स्वमतानुगुण्याय कल्पितः, चकारश्च निष्कासितः। वाक्यद्वयमपि सिद्धान्त-

वाक्यमेव। भाष्यवाक्यस्यापि न विरोधः। भगवतो रूपं अञ्जसैव साधकानुग्रहार्थं स्वीकृतं तद्यथाभूतमेवेत्यर्थः। न त्वकृतकमित्यर्थः। भगवता स्वेच्छया रामकृष्णादिरूपवत् परिगृहीतस्याकृतकत्वाभावात्। परन्तु रामकृष्णादिरूपवत् तत् चक्षुषा न ग्राह्यं, उपासकस्य अकलुषेण भक्तिप्रणिधानादिसाधनान्तरवता मनसा गृह्यते। तच्च भगवतो रूपं उपासकस्य विशुद्धे मनसि स्फुरति इत्यर्थः॥

द्रमिडभाष्यकारवाक्यपरिशीलकैर्भगवत्पादैरप्युक्तमत्र—'दृश्यते-निवृत्तचक्षुर्भिः समाहितचेतोभिः ब्रह्मचर्यादिसाधनापेक्षम्' इति। 'न ह्यरूपाया देवताया रूपमुपदिश्यते, यथाभूतवादि हि शास्त्रम्' इत्यादिभाष्यवाक्यमपि 'ध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिद्ध्यति' 'यथाभूतानेवात्मेश्वरदेवतादीन् ग्राहयत्युपासनार्थं शास्त्रम्' इत्यादिपूर्वप्रदर्शितभगवत्पादवाक्यमूलभूतं व्यावहारिकं सगुणं रूपवत् ब्रह्माभ्युपगच्छतां न प्रतिकूलम्। भगवत्पादभाष्ये, द्रमिडभाष्यग्रन्थे च यथाभूतत्वमसत्त्वाभावमात्रं, न पारमार्थिकत्वम्। पारमार्थिकत्वार्थकत्वाभिप्रायेण च परकीयं अद्वैतवाददूषणं 'परमेश्वरस्यापि सर्वशक्तित्वात् उपासकानुग्रहाय रूपोपादानसम्भवात्। किं मायामयं रूपम्? नेति ब्रूमः। पारमार्थिकमेवैतत्। यथाभूतार्थज्ञापकं हि शास्त्रम्' इति भास्करग्रन्थार्थचौर्यरूपम्। यत्तु सौदर्शनं वाक्यं 'ऐन्द्रजालिकवस्तुवत् मायाकृतमिति शङ्काव्यावृत्त्यर्थमाह—तत्तु इति। मिथ्याभूतं दुष्टेन्द्रियग्राह्यं अदुष्टकरणग्राह्यत्वश्रवणात् परमार्थभूतमित्यभिप्रायः' इति, तत् द्रमिडभाष्यकारवाक्यतात्पर्यापरिज्ञाननिबन्धनम्। न हि चक्षुर्ग्राह्यत्वं अपरमार्थत्वप्रयोजकं परमते। येन चक्षुरग्राह्यत्वेन पारमार्थ्यं स्यात्। नापि दुष्टचक्षुर्ग्राह्यत्वं अपारमार्थिकत्वप्रयोजकम्। प्रातिभासिकस्य चक्षुर्ग्राह्यत्वस्यैव अभावादद्वैतमते। भाष्यवाक्यन्तु भगवद्रूपं चक्षुषा न गृह्यते, किन्तु विशुद्धमनसा गृह्यते इति वस्तुतत्त्वं बोधयति। न तु चक्षुरग्राह्यत्वेन विशुद्धमनोग्राह्यत्वेन च पारमार्थ्यं साधयति। अञ्जसेति पदेन उक्तं यथाभूतत्वं नहीति वाक्येन शास्त्रस्य यथाभूतवादित्वेन उपपाद्यते। तस्मात् सुदर्शनः

द्रमिडभाष्यकारस्याशयमयथाभूतं वेदार्थसङ्ग्रहेऽप्यनुक्तं व्यावृण्वन् न स्वमतं साधयितुमीष्टे ॥

यच्च 'हिरण्मय इति रूपसामान्यात् चन्द्रमुखवत्' इति वाक्यकारवाक्यं 'न मयडत्र विकारमादाय प्रयुज्यते अनारम्भ्यत्वादात्मनः' इति भाष्यकार-वाक्यञ्च वेदार्थसङ्ग्रहे निर्दिश्यते । इदं वाक्यकारवाक्यं इदं भाष्यकारवाक्य-मित्यपि तत्र नोच्यते । तत्किमर्थं स्वेन निर्दिष्टमित्यपि रामानुजार्येण नोक्तम् । केवलं वाक्यद्वयं पठितम् । तात्पर्यदीपिकाकृतैव तत्तात्पर्यमाविष्कृतम्—'विकार-वाचिमयट्श्रवणाद्रूपस्य कृतकत्वशङ्का । मयटः विकारार्थत्वानभ्युपगमात्परिहारः' इति । तत्रोच्यते—इदं वाक्यकारद्रमिडाचार्यवाक्यद्वयमालोच्यैव भगवत्पादैः व्याख्यातं छान्दोग्योपनिषद्भाष्ये—'हिरण्मयः, हिरण्मय इव हिरण्मयः । न हि सुवर्णविकारत्वं देवस्य सम्भवति । ऋक्सामगेष्णत्वापहतपाप्मत्वासम्भवात् । न हि सौवर्णे अचेतने पाप्मादिप्राप्तिरस्ति । येन प्रतिषिध्येत । चाक्षुषे चाग्रहणात् । अतो लुप्तोपम एव हिरण्मयशब्दः । ज्योतिर्मय इत्यर्थः' इति । तत्रानन्दगिरि-टीका—'किमिति हिरण्मयपदमुपमार्थं व्याख्यायते, हिरण्यविकारत्वमेवात्र विवक्षितं किन्न स्यादित्याशङ्क्याह—नहीति' इत्यादि । वाक्यग्रन्थे 'चन्द्रमुखवत्' इति पदं, भगवत्पादोक्तं 'लुप्तोपमो हिरण्मयशब्दः हिरण्मय इव उज्ज्वलः' इत्यर्थं बोधयति । 'अनारम्भ्यत्वादात्मन' इति भाष्यवाक्यमपि 'न हि सुवर्णविकारत्वं देवस्य सम्भवति' इति भगवत्पादोक्तमेवार्थं प्रतिपादयति । भगवता स्वेच्छया परिगृहीतस्य कृतकस्यापि शरीरस्य सुवर्णविकारत्वं सौवर्णदेवताप्रतिमादिवत् न सम्भवत्येव । एतेन, सुदर्शनेन शरीरस्याकृतकत्वसिद्ध्यर्थं विग्रहविशिष्टस्यात्मन इत्यर्थाङ्गीकारेऽपि न दोषः । तावताऽपि सुवर्णकृतत्वमेव शरीरस्य नास्तीति सिद्ध्येत् । भगवता स्वेच्छया परिगृहीतस्य सर्वथा अकृतकत्वासंभवात् । सगुणब्रह्मणः दिव्यमङ्गळ-विग्रहपत्नीपरिजनस्थानादीनां श्रुतिषु प्रदर्श्यमानानां भगवत्पादैरप्यभ्युपगमात् नानभ्युपगमप्रयुक्तदोषाणां प्रसक्तिः । 'सगुणविद्याविपाकावस्थानन्त्वेतत्

स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते' इति भगवत्पादैरेवोक्तत्वात् इत्यवगन्तव्यम् ॥

## (३७) कप्यासं पुण्डरीकमिति श्रुतौ वाक्यकारोक्तेषु षडर्थेषु भगवत्पादस्वीकृतार्थस्यादुष्टत्वम् ।

ब्रह्मविद्याभरणे अन्तरधिकरणे 'कं जलं पिबतीति कपिः सूर्यः तेनासितं विकसितं कप्यासं, कं पिबतीति कपिः पद्मनालः तत्रास्ते इति कप्यासं, कं पिबतीति कपाः तस्मिन् कपि सप्तम्या अलुक्समासे कप्यासं, के अप्यास्ते इति कप्यासं, वष्टि वागुरिरल्लोपमवाप्योरुपसर्गयोरिति लुप्ताकाराऽपिपूर्वक आसिः.। एवं पुण्डरीकविशेषणे कप्यासशब्दे वाक्यकारेण बह्वयो व्युत्पत्तयो दर्शिताः । छान्दोग्यविवरणे भगवत्पादैः कपेर्मर्कटस्यास इत्येव व्युत्पत्तिः स्वीकृता । तथा व्युत्पादितेन च कप्यासशब्देन सादृश्यपरेण रक्तत्वं पुण्डरीकविशेषणं लभ्यत इति स्वीकृतम् । तत्र कपेर्मर्कटस्येति व्युत्पादने को गुणः अभिमतः अन्यासु च व्युत्पत्तिषु को दोषः? यतस्ताः परित्यक्ताः' इत्यादिना ग्रन्थेन इतरव्युत्पत्तिषु दोषानुद्भाव्य भगवत्पादपरिगृहीतव्युत्पत्तिः समर्थिता । शिवार्कमणिदीपिकायामुक्तम्—'वाक्यकारेणाप्यत्रैव विषयवाक्ये पुण्डरीकविशेषणं कप्यासपदं मर्कटजघनपरतया व्याख्यातम् । कपिशब्दस्य यौगिकार्थमादाय तस्य पदस्य अन्येष्वपि केषुचिदर्थेषु वाक्यकारेण प्रदर्शितेष्वपि रूढिप्राबल्यश्रुत्यन्तरदृष्टार्थपरव्याख्यानौचित्यन्यायानुसारिभिः तत्त्वविद्भिः (भगवत्पादैः) इदमेव व्याख्यानं परिगृहीतम् । 'य उदगान्महतोऽर्णवाद्विभ्राजमानस्सरिरस्य (सलिलस्य) मध्यात् समावृषभो रोहिताक्षः' इति मन्त्रे मण्डलान्तर्वर्तिनो लोहिताक्षत्ववर्णनदर्शनेन अत्रापि श्रुत्यन्तरप्रतिपन्नार्थवर्णनसम्भवे अर्थान्तरवर्णनानौचित्याच्च'। इति ॥

छान्दोग्योपनिषद्भाष्ये 'तस्य यथा कपेः मर्कटस्य आसः कप्यासः । आसेरुपवेशनार्थस्य करणे घञ् । कपिपृष्ठान्तः, येनोपविशति । कप्यास इव

पुण्डरीकमत्यन्ततेजस्वि, एवमस्य देवस्याक्षिणी। उपमितोपमानत्वात् न हीनो-पमा' इत्युक्तम् ॥

वेदार्थसङ्ग्रहे—'गम्भीराम्भस्समुद्भूतसुमृष्टनाळरविकरविकसितपुण्डरी-कदलामलायतेक्षणः' इत्युक्तम्। तदीयटीकायां तात्पर्यदीपिकायामुक्तम्—'तस्य यथा कप्यासं पुण्डरीकमेवं अक्षिणी' इत्यस्यार्थं हृदि निधायाह—गम्भीराम्भ इति। अस्य वाक्यस्य वाक्यकारेण षडर्थाः पूर्वपक्षत्वेन सिद्धान्तत्वेन चोक्ताः। तत्र सिद्धान्तितार्थत्रयमत्रोक्तम्। इतरार्थत्रयस्य पूर्वपक्षत्वं तत्स्वभावादेवावगतम्। तदाह वाक्यकारः—'आदित्यक्षिप्तं वा श्रीमत्त्वात्' इति ॥

श्रुतप्रकाशिकायामप्युक्तम्—'तस्य यथेति। अस्य वाक्यस्य वाक्य-कारेण षडर्थाः पूर्वपक्षतया सिद्धान्तत्वेन चोक्ताः। तत्रार्थत्रयस्य पूर्वपक्षत्वं तत्स्वभावादेवावगतम्।

(१) कपिः आदित्यः 'कपि चलन' इति धातोर्निष्पन्नः कपिशब्दः कं पिबतीति च। 'कपिर्बिभस्ति तेजनम्' इति च वैदिकप्रयोगः। तस्य आसं मण्डलं कप्यासम्। यथा आदित्यमण्डलं हृदयपुण्डरीकञ्च परमात्मनः उपासनस्थानं, तथा तस्य उपासकस्याक्षिणी अप्युपासनस्थानमित्येकोऽर्थः।

(२) कपिः मर्कटः तस्य आसं जघनप्रदेशः, मर्कटपृष्ठसाम्यमुच्यत इति यावत्।

(३) कप्यासं ईषद्विकंसितमित्यपरोऽर्थः। एवं शब्दार्थस्वभावपर्या-लोचनायामिदमर्थत्रयं पूर्वपक्षतया वाक्यकाराभिप्रेतमित्यवगतम्। अर्थान्तरत्रय-न्तूपपन्नम्।

(४) कं पिबतीति कपिः आदित्यः; तेन अस्यते क्षिप्यते विका-स्यत इति कप्यासम्; तथाऽऽह वाक्यकारः—'आदित्यक्षिप्तं वा श्रीमत्त्वात्' इति।

(५) कं उदकं स्वरन्ध्रैः पिवतीति कपिः नाळं, तस्मिन् आस्त इति कप्यासम्। अभग्नक्रिमिकीटाद्यदष्टनाळमित्यर्थः। अपचितादपि पङ्कनात् नाळस्थपुण्डरीकस्य शोभातिशयोऽस्तीति सोऽत्र विवक्षितः।

(६) कं जलं, आस उपवेशन इति धातुरपिपूर्वकः। 'वष्टि वागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनात् अपेरकारलोपः। कप्यासं सलिलस्थमित्युक्तं भवति। एवमस्यार्थत्रयस्य उपपन्नतया वाक्यकारेण सिद्धान्ततयोक्तत्वमभिप्रेत्य हि भगवता भाष्यकारेण वेदार्थसङ्ग्रहेऽभिहितम्—गम्भीराम्भस्समुद्भूतसुमृष्टनाळरविकरविकसितपुण्डरीकदळामलायतेक्षणः' इति॥

श्रुतप्रकाशिकायामर्थत्रये अनुपपन्नत्वं वर्णितं विस्तारेण। तत्र मर्कटजघनभाग इत्यर्थस्वीकारपक्षे एवमनुपपत्तिरुक्ता—'तदप्ययुक्तम्। मर्कटपृष्ठं पुण्डरीकञ्च किमुपमानद्वयं, उतैकोपमा? तत्रोपमानद्वित्वमयुक्तम्। स्वतःप्राप्तसामानाधिकरण्यपरित्यागप्रसङ्गात्। श्लाघ्यार्थेन निर्वाहे सम्भवत्यपि हीनोपमाश्रयणायोगाच्च। यद्येकोपमा, तथा सति मर्कटपृष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात्। तदा कप्यासपदस्य गौणता स्यात्' इति। भगवत्पादीयार्थाभ्युपगमे एकोपमा स्यादिति उपमानद्वयाभ्युपगमकल्पीयदूषणस्यानवकाशः। तदा कप्यासपदस्य गौणता स्यादिति दोषः परमवशिष्टः। सोऽपि नास्तीति ब्रह्मविद्याभरणे उक्तम्। तथाहि 'कपिशब्दस्य रूढ्यर्थग्रहणसम्भवे तत्रापि योगाश्रयणं न न्याय्यम्। आसशब्दश्च सर्वेष्वपि पक्षेषु यौगिक एव। यद्यपि कपिशब्दरूढ्यर्थपक्षे कप्यासशब्दः तत्सदृशपरः, तथापि रूढिपूर्वकलक्षणापेक्षया योगार्थग्रहणं न न्याय्यम्, योगमपेक्ष्य रूढेः शीघ्रोपस्थितिकत्वेन तन्मूलाया लक्षणाया अपि शीघ्रोपस्थितिकत्वात्। अपि च नास्मिन्पक्षे हीनोपमा। चक्षुरुपमानभूतपुण्डरीकोपमानत्वमात्रेण चक्षुषि हीनोपमानत्वाप्रसक्तेः' इति॥

श्रुतप्रकाशिकाकृताऽपि भगवत्पादीयार्थाभ्युपगमे हीनोपमादोषः नोक्त एव। नवीनाः केचन हीनोपमा भवतीति शङ्कन्ते। तदयुक्तम्। तथा सति

रामायणे 'वराहरुधिराभेण शुचिना च सुगन्धिना। अनुलिप्तं परार्ध्येन चन्दनेन परन्तपम् ॥' इत्यादावपि तद्दोषप्रसङ्गः। श्रीरामचन्द्रस्य गात्रे अनुलिप्तचन्दनस्य निहीनवराहरुधिरसाम्यानौचित्यात् इत्यवधेयम् ॥

किंच 'गाढमालिङ्गमच्चित्त योषा जारमिव प्रियम्' इति श्रुतिः भक्त-चित्तस्य भगवदालिङ्गने योषितः जारालिंगनं दृष्टान्तयन्ती लोकस्थितिमनुसरन्ती हीनोपमादिकं न लक्षयति इति तत्वविद्भिरालोचनीयम्। न काव्यादिन्यायस्य श्रुतावपि संबन्धः परिकल्पनीयः ॥

यत्तु रङ्गरामानुजः रामानुजाव्याख्यातदशोपनिषद्व्याख्यानादिग्रन्थकर्ता 'मर्कटजघनसदृशपुण्डरीकसादृश्याद्यर्थान्तरन्त्वश्लीलत्वादिदोषदुष्टतया वाक्य-कृदनादृतत्वात् भाष्यकारेणाप्यनादृतम्' इति धाष्ट्र्यादाह। तत्तुच्छम्। सुदर्शन-वेङ्कटनाथादिभिरपि रङ्गरामानुजपूर्वतनैः अश्लीलत्वादिदोषाः नोद्भाविताः। वाक्यकारानादृतोऽयमर्थ इत्यपि तैर्नोक्तम्। अयन्तु नवीनः धाष्ट्र्येन तथा वक्ति। वाक्यकारोक्त एवासावपि अर्थः वाक्यकारानादृत इति कथमनेनावगतम्? अश्लीलत्वादिदोषाश्च वराहरुधिराभेण इति रामायणेऽपि प्रसज्जन्ते। तत्र न दोष इति चेदत्रापि न दोष इति रङ्गरामानुज एव शान्तेन चित्तेनाकलयतु ॥

## (३७) वेदार्थसङ्ग्रहे श्रीकण्ठाचार्योक्तार्थस्य वाक्यकारादिविरोधेन यो निरासः तदनुवादः।

वेदार्थसङ्ग्रहे उक्तम्—'यत्पुनरिदमाशङ्कितं—'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्यत्र आकाशशब्देन जगदुपादानकारणं प्रतिपाद्य तदन्तर्वर्तिनः कस्यचित् तत्वविशेषस्य अन्वेष्टव्यता प्रतिपाद्यते। अस्याका-शस्य नामरूपयोर्निर्वाहकत्वश्रवणात्, पुरुषसूक्ते पुरुषस्य नामरूपयोः कर्तृत्वदर्शनाच्च आकाशपर्यायभूतात् पुरुषात्, अन्यस्यान्वेष्टव्यतयोपास्यत्वं

प्रतीयत इति। अनधीतवेदानां अदृष्टशास्त्रविदां इदं चोद्यम्। यतस्तत्र श्रुतिरेवास्य परिहारमाह। वाक्यकारश्च। 'दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्' इति चोदिते, 'यावान्वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः' इत्यादिना अस्याकाशशब्दवाच्यस्य परमपुरुषस्यानवधिकमहत्त्वं, सकलजगत्कारणतया सकलजगदाधारत्वं च प्रतिपाद्य, 'तस्मिन्कामास्समाहिताः' इति अपहतपाप्मत्वादिसत्यसंकल्पत्वपर्यन्तगुणाष्टकं निहितमिति, परमपुरुषवत् परमपुरुषगुणाष्टकस्यापि पृथग्विजिज्ञासितव्यत्वप्रतिपिपादयिषया 'तस्मिन्यदन्तस्तदन्वेष्टव्य'मित्युक्तमिति श्रुत्यैव सर्वं परिहृतम्॥

एतदुक्तं भवति—'किं तदत्र विद्यते यदन्वेष्टव्य'मित्यस्य चोद्यस्य अस्मिन् सर्वस्य जगतः स्रष्टृत्वं आधारत्वं नियन्तृत्वं शेषित्वं अपहतपाप्मत्वादयो गुणाश्च विद्यन्ते, इति परिहार इति। तथाच वाक्यकारवचनं—'तस्मिन्यदन्तरिति कामव्यपदेशः' इति। काम्यन्त इति कामाः अपहतपाप्मत्वादयो गुणा इत्यर्थः। एतदुक्तं भवति—यदेतद्दहराकाशपदवाच्यं निखिलजगदुदयविभवलयलीलं परं ब्रह्म तस्मिन्यदन्तर्निहितं अनवधिकातिशयं अपहतपाप्मत्वादिगुणाष्टकं तदुभयमपि अन्वेष्टव्यं विजिज्ञासितव्यमिति। यथाऽऽह 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवती'ति।' इति॥

अत्र तात्पर्यदीपिका—'अथ व्योमातीतवादं हृदि निधाय तं समूलमुन्मूलयितुं तत्परिपाटीमुपन्यस्यति—यत्पुनरिति। आकाशान्तर्वर्तिनः कस्यचिदन्वेष्टव्यता स्यात्, ततः किमित्यत्राह—अस्येति। एतत्प्रतिक्षिपति—अनधीतेति। अनधीतवेदानां अदृष्टशास्त्रविदामिदं चोद्यमिति। दहरविद्यायाः पूर्वापरवाक्यमप्यनधीतम्, वाक्यकारग्रन्थादयश्चादृष्टास्तैरिति भावः। कथं वाक्यकारेण परिहृतमित्यत्राह—तथा चेति॥

रामानुजभाष्येऽपि दहराधिकरणे उक्तम्—'तदेतद्वाक्यकारोऽपि स्पष्टयति—'तस्मिन्यदन्तरिति कामव्यपदेशः' इत्यादिना' इति ॥

तत्र श्रुतप्रकाशिका—'अथान्तर्वर्तिनः कामत्वं सम्प्रदायतो द्रढयति—तदेतदिति ।' इति ॥

## (३८) श्रीकण्ठाचार्योक्तार्थस्य निर्दुष्टत्वोक्तिपूर्वकं श्रीकण्ठाचार्यस्य रामानुजार्यात्पूर्वत्वस्थिरीकारः ।

अत्र वाक्यकारवचनं, दहराकाशः परमात्मा तदन्तर्वर्ति वस्तु अपहतपाप्मत्वादिगुणजातं कामपदव्यपदेश्यं उभयमपि ध्येयं इति भगवत्पादसिद्धन्तस्य न विरोधि, किन्त्वनुकूलमेव । किन्तु श्रीकण्ठाचार्यभाष्ये दहराकाशः परचिच्छक्तिरूपः निखिलजगदुपादानभूतः; नारायणोऽपि शक्त्यंशभूतः । तदन्तर्वर्ती परमेश्वरः । दहराकाशतदन्तर्वर्त्यात्मकं उभयमप्युपास्यमिति कश्चन सिद्धान्तभेदः उक्तः। स च निर्दुष्ट इति शिवार्कमणिदीपिकोक्तरीत्या उपरि स्फुटीकरिष्यामः। तमेव सिद्धान्तमनूद्य रामानुजार्यः श्रीकण्ठाचार्यनामाननुवदन्नेव प्रतिक्षिपति वेदार्थसङ्ग्रहे स्वीयभाष्ये च । सुदर्शनोऽपि उभयत्र टीकायां श्रीकण्ठाचार्यनामानुवादं विनैव व्योमातीतवादशब्दमात्रप्रक्षेपेणैव विवृणोति । इदमपरं कारणं श्रीकण्ठाचार्यादुत्तरः रामानुजार्यः । श्रीकण्ठमतचौर्यकृत् स एव इति विषये ॥

## (३९) पूजनीयस्य श्रीकण्ठाचार्यस्य रामानुजादिभिस्तिरस्कारः ।

अत्याश्चर्यमिदं; यत् वस्तुतः स्वीयविशिष्टाद्वैतसिद्धान्तमार्गप्रदर्शकस्य स्वेनापि परमपूज्यस्य श्रीकण्ठाचार्यस्य कुत्रापि स्वीयग्रन्थे नामाऽपि नोच्चार्यते, कृतज्ञत्वञ्च नाविष्क्रियते रामानुजादिभिः । प्रत्युत 'नारायणात्परमिति केचिदवैदिकाः विदुः' 'अवैदिकप्रतिपत्तेः पर्वत्रयं दृश्यते . नारायण उपादानं रुद्रो निमित्तमिति तत्रैकं मतम्' इति सुदर्शनेन तात्पर्यदीपिकायां श्रीकण्ठाचार्यस्यावैदिकत्वोद्धोषणं क्रियते, 'अनधीतवेदानां अदृष्टशास्त्रविदामिदं

चोद्यम्' इति वेदार्थसङ्ग्रहे रामानुजार्येण, 'दहरविद्यायाः पूर्वापरवाक्यमप्यनधीतं वाक्यकारग्रन्थादयश्चादृष्टास्तैरिति भावः' इति तात्पर्यदीपिकायां सुदर्शनेन च श्रीकण्ठाचार्याः अनधीतवेदाः अदृष्टवाक्यकारादिग्रन्थाश्च इति दूषणमपि क्रियते। अहो रामानुजादीनां श्रीकण्ठाचार्यविषये कृतघ्नत्वम्। श्रीकण्ठाचार्यादिभिः वाक्यकारग्रन्थादयः सम्यग्दृष्टा एव। दृष्ट्वैव च तदभिप्रायः वर्ण्यते। शशशृङ्गायमाणा बोधायनवृत्तिः परं न दृष्टा। सुदर्शनवेङ्कटनाथाभ्यां वाक्यकारद्रमिडाचार्ययोः ग्रन्थो न दृष्ट इति उपरिष्टान्निरूपयिष्यते। तदास्ताम्।

## (४०) वेदार्थसंग्रहे निरस्तार्थस्य श्रीकण्ठभाष्यस्थस्य प्रकाशनम्।

अत्र श्रीकण्ठाचार्यैः दहराधिकरणे उक्तानि वाक्यानि लिख्यन्ते; यानि मनसि कृत्वा वेदार्थसङ्ग्रहे दूष्यते। 'व्योमातीतवादं हृदि निधाय तं समूलमुन्मूलयितुं तत्परिपाटीमुपन्यस्यति यत्पुनरिति' इति तात्पर्यदीपिकायां अवतार्यते च। अत्र सुदर्शनवाक्ये 'व्योमातीतवादं हृदि निधाय' इत्युक्तेरयं भावः—श्रीकण्ठाचार्योक्तः यः व्योमातीतवादः तं रामानुजार्यः हृदि निधाय श्रीकण्ठाचार्येण एवमुक्तं इति बहिरनुद्घाट्य, उद्घाटने स्वीयतन्मतचोरत्वप्रकाशापत्तेः, इति। 'तं समूलमुन्मूलयितुम्' इत्युक्त्या च सुदर्शनः स्वीयं श्रीकाण्ठाचार्यद्वेषं स्पष्टमुद्गिरति। 'ननु दहरपुण्डरीकमध्ये दहराकाशान्तर्वर्तित्वेनोपास्यत्वं 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः' इत्याद्युपनिषदन्तरे प्रसिद्धं परमेश्वरस्य, इह दहराकाशत्वेनेति विरोध इति चेत्, अत्रापि दहराकाशमध्यवर्ती परमेश्वर उपास्यः। किन्तु दहराकाशे परमेश्वरधर्माणामपहतपाप्मत्वादीनां संबन्धप्रतीतेः दहराकाशत्वमप्यस्य चिदम्बररूपतयेति न विरोधः' इति श्रीकण्ठाचार्यभाष्यवाक्यानि।

अत्रेत्थं शिवार्कमणिदीपिकाव्याख्या श्रीमदप्पय्यदीक्षितविरचिता—'विरोध इति, क्वचिद्दहराकाशः परमेश्वरः प्रतीयते, क्वचित्तदन्तर्वर्तीति विरोधादनिर्णयः प्राप्त इति भावः। असिद्धो विरोधः, अत्रापि 'दहरोऽस्मिन्न-

न्तराकाशः तस्मिन्यदन्तस्तदन्वेष्टव्य 'मिति दहराकाशमध्यवर्तिनः परमेश्वरस्योपास्यत्वप्रतिबोधादिति समाधत्ते अत्रापीति। तर्हि अपहतपाप्मत्वादिधर्मान्वयात् दहराकाशः परमेश्वर इति पूर्वोक्तं सर्वं विरुध्येतेत्याशङ्क्य परिहरति—किन्त्वित्यादिना।

अत्रेदं चिन्त्यते—कथं दहराकाशः तदन्तर्वर्ती च परमेश्वर इति सङ्गच्छते? स्वस्यैव स्वान्तर्वर्तित्वस्य विरुद्धत्वात्। 'अन्यो ह्यन्यस्मिन्प्रतिष्ठितः' इति श्रुतेः। तयोः शक्तिशिवरूपत्वस्य शिवशक्तिरूपत्वस्य वाऽभ्युपगमे विरोधो नास्तीति चेत्, सत्यम्; तथापि दहराकाश एव शिवरूपतया शक्तिरूपतया वा परमेश्वर इति युक्तम्। न तु तदन्तर्वर्त्यपि परमेश्वर इति। 'तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्येतदनन्तरं 'तं चेद्ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्' इत्यन्तेवासिनां प्रश्नमुद्भाव्य 'स ब्रूयाद्यावान्वा अयमाकाशः' इत्याचार्यस्योत्तरमुपक्रम्य 'उभे अस्मिन्' इत्यादिना द्यावापृथिव्यादिकस्यैव दहराकाशान्तर्वर्तित्वप्रतिपादनादिति। अत्रायं भाष्याभिप्रायः—इदं प्रकरणं ब्रह्मोपासनाविधिपरमिति तावदभ्युपगन्तव्यम्। 'अथ यदिदमस्मिन् ब्रह्मपुरे' इत्युपक्रम एव तद्विधित्सावगमात्। मध्ये 'तेषां सर्वेषु लोकेषु कामचारो भवति' इति मुक्तेः फलत्वश्रवणात्। उपसंहारे च 'तयोर्ध्वमायन्नमृतत्वमेति' इति मुक्तिफलवर्णनात्। दहराकाशः परमेश्वर इत्यभ्युपगन्तव्यं ब्रह्मात्मश्रुत्यपहतपाप्मत्वाद्यन्वयानुरोधात्। दहराकाशान्तर्वर्त्यपि परमेश्वर इत्यभ्युपगन्तव्यम्, तदन्तर्वर्तिविषयत्वादुपासनविधानस्य। एवमवश्याभ्युपगन्तव्यार्थद्वयाविरोधेनैव सन्दर्भो योजनीयः' इति॥

इत्थं शिवार्कमणिदीपिकायां 'अविरोधेनैव संदर्भो योजनीयः' इति प्रतिज्ञाय 'तद्योजनाप्रकारस्तु' इत्यादिना विस्तारेण योजनाप्रकारवर्णनावसरे 'तत्र किं वर्तत इति प्रश्नस्य उत्तरमुच्यते—'उभे अस्मिन्' इत्यादिना। तत्र

उपासकस्य भोगस्थानभोगोपकरणभोग्यजातं दहराकाशे समाहितमिति नोच्यते ' इत्युक्त्वा, तत्र हेतून् प्रदर्श्य, ' किन्तु सर्वविधमपि भोगस्थानभोगोपकरणभोग्यजातम् विरक्तावस्थायामुपासकेन युगपल्लब्धं चेत् यावत्प्रेमास्पदं भवेत् तावत्प्रेमास्पदत्वयोग्यं ' तदेतत्प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मा'दिति श्रुत्यन्तरे तथैव प्रसिद्धं निरतिशयानन्दरूपं ब्रह्म गौण्या वृत्त्या द्यावापृथिव्यादिसर्वशब्दान्तसकलशब्दसन्दर्भे प्रतिपाद्यमिति तदेव दहराकाशे समाहितमित्युच्यते' इत्युपवर्णितम् ॥

दीक्षितैरेव स्वकृतानन्दलहरीव्याख्यायां स्वयं निर्मितायां चन्द्रिकाख्यायां ' तथा ' दहर उत्तरेभ्य ' इत्यधिकरणे ' अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् ' इत्यन्तराकाशवाक्यस्य, तद्विषयस्य तस्याधिकरणस्य च शक्तिविषयत्वं शङ्कोत्तराभ्यां कण्ठत उक्तं श्रीकण्ठाचार्यैः—'ननु दहरपुण्डरीकमध्ये .... चिदम्बररूपतयेति न विरोध ' इति ' इति पूर्वमुदाहृतश्रीकण्ठभाष्यवाक्याशय उक्तः । ' निखिलजगदण्डषण्डबुद्बुदनिकुरुम्बजलधिस्थानीया परप्रकृतिरूपा परा शक्तिर्हि चिदम्बरमुच्यते । तत्स्वरूपं ब्रह्म आकाशशरीरम् ' इति च चिदम्बरशब्दार्थो विवृतः । ' तस्मिन् यदन्तरिति कामव्यपदेशः' इति वाक्यकारोक्तकामशब्दस्य श्रीकण्ठभाष्यशिवार्कमणिदीपिकापर्यालोचनायां गौण्या वृत्त्या ब्रह्मैवार्थ इति लाभात् न वाक्यकारग्रन्थविरोधः, नच श्रुतिवाक्यविरोधः । अधिकं शिवार्कमणिदीपिकायामनुसन्धेयमित्युपरम्यते ।

## (४१) जीवब्रह्मणोरभेद एव वाक्यकाराद्यभिमतः न शरीरशरीरिभावः ।

रामानुजभाष्ये—' इदमेव शरीरात्मभावलक्षणं तादात्म्यं ' आत्मेति तूपगच्छन्ति ग्राहयन्ति च ' इति वक्ष्यति । ' आत्मेत्येव तु गृह्णीयात् ' इति च वाक्यकारः' इत्युक्तम् । श्रुतप्रकाशिकायां तद्विवरणावसरे उक्तम्—'परेण स्वरूपैक्यपरत्वेन उदाहृतं सूत्रं वाक्यकारवचनञ्च व्याचष्टे इदमेवेत्यादिना' इति ।

वेदार्थसङ्ग्रहे च वाक्यकारवचनं किञ्चिदधिकमुदाहृतम्—'अत इदमुच्यते—'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' इत्यादिना अहंग्रहेण उपासनं वाक्यकारेण। कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमात्मैवेति सर्वस्य तन्निष्पत्तेरित्युक्तम्' इति।

अत्र तात्पर्यदीपिका—'अत इदमित्यादि। इदं अहंग्रहेणोपासनं वाक्यकारेणोच्यत इत्यन्वयः। चेतनानां नित्यत्वात् सर्वस्य तन्निष्पत्तिर्नोपपद्यत इत्यत्राह—कार्यावस्थ इति। विशिष्टाद्विशिष्टस्योत्पत्तिः। सा च चिदचित्स्वरूपनित्यत्वेऽपि अवस्थाभेदेन उपपद्यत इत्यर्थः।' इति।

वेदार्थसङ्ग्रहे अत इति पदस्य पूर्वप्रकरणानुरोधेन सर्वसामानाधिकरण्यस्य शरीरितया परमात्मानुप्रवेशकृतत्वादित्यर्थः लभ्यते। 'आत्मेत्येव तु गृह्णीयात्' इति वाक्यं शतदूषण्यामप्यनूदितम्।

अत्रेदमवधेयम्—वाक्यकारः ब्रह्मसूत्रोपरि स्वतन्त्रं व्याख्यानं बोधायनवृत्तिसङ्ग्रहरूपं वा ग्रन्थं न कृतवान् तत्र प्रमाणाभावात् इति सुधीरमुद्धोषयामः। छान्दोग्योपनिषद्विवरणरूपमेव वाक्यग्रन्थं प्रणीतवान् वाक्यकारः। एतच्चाविप्रतिपन्नं सर्वेषामपि। तत्र ब्रह्मसूत्रार्थविवरणस्य साक्षात् प्रसक्तिरेव प्रायो नास्ति। ब्रह्मसूत्रेषु भूयस्सु प्रदेशेषु छान्दोग्योपनिषद्वाक्यानां विचारितत्वात् तत्सम्बद्धान् विषयानधिकृत्य प्रसङ्गात् कतिपयब्रह्मसूत्रार्थविवरणं भवत् भवेन्नाम। एवञ्च 'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' इति वाक्यग्रन्थः छान्दोग्यषष्ठाध्यायगतस्य 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति वाक्यस्य विवरणरूपः सम्भाव्यते। तत्र च 'तत्त्वमसी'ति प्रतीचः ब्रह्मणा सामानाधिकरण्यं स्वरूपैक्यनिबन्धनम्। 'स आत्मा जगत' इत्युक्तिः जगतः तन्निष्पाद्यत्वेन तदनन्यत्वनिबन्धना। शरीरशरीरिभावेन सामानाधिकरण्यकल्पनं परकीयं सिद्धान्ते नेष्यते। अप्रामाणिकत्वात्। वाक्यभाष्यग्रन्थयोरपि शरीरशरीरिभावाकीर्तनात्। परैरपि तादृशवाक्यादिग्रन्थाप्रदर्शनात्। अहंग्रहोपासनस्थलेषु च अहंग्रहो नाम जीवब्रह्मणोः अभेदचिन्तनमेव, न परकीयपारिभाषिकविप्रतिपन्न-

शरीरात्मभावलक्षणतादात्म्यचिन्तनम् । अतः सर्वस्य जगतः तन्निष्पाद्यत्वात् कार्यकारणानन्यत्वन्यायेन, स आत्मा इति जगतः आत्मेत्येव परमात्मानं गृह्णीयात्, इति वाक्यकारवाक्यार्थः अस्माभिरिष्यते इति वाक्यग्रन्थविरोधो नास्माकम् ।

परकीयार्थस्तु अप्रामाणिकत्वात् वाक्यकाराद्यनभिमतत्वाच्च नेष्यते । 'तत् सत्यं स आत्मा' इति छान्दोग्यवाक्यस्य च भगवत्पादाभिमतोऽर्थः एवं—'येन चात्मना आत्मवत्सर्वमिदं जगत् तदेव सदाख्यं कारणं सत्यं परमार्थसत्। अतस्स एवात्मा जगतः प्रत्यक्स्वरूपं सतत्वं याथात्म्यं, आत्मशब्दस्य निरुपपदस्य प्रत्यगात्मनि गवादिशब्दवत् निरूढत्वात। अतः तत् सत् त्वमसि भवसि हे श्वेतकेतो' इति। 'आत्मेत्येव तु गृह्णीयात्' इत्येव वाक्यग्रन्थवाक्य-स्वरूपम्, 'सर्वस्य तन्निष्पाद्यत्वात्' इति परकीयोऽधिकावाप इति भाति। तथा सति आत्मेत्येव गृह्णीयात् परमात्मानं, प्रत्यक्परमात्मनोः स्वरूपैक्यात्। इत्यर्थस्सम्भवति। 'सर्वस्य तन्निष्पाद्यत्वादि'त्युक्ते प्रतीचः परमात्मनिष्पाद्यत्वा-भावात् हेतुर्नान्वेति। अतः अधिकावाप एव परस्य। यदि तु स प्रामाणिकस्स्यात् तदा 'स आत्मा' इत्यंशविवरणरूपतया पूर्वोक्तरीत्या योजनीयम्—सर्वस्य जगतः परमात्मनिष्पाद्यत्वात् तदनन्यत्वन्यायेन परमात्मानं जगतः आत्मेत्येव गृह्णीयात्, इति ।

छान्दोग्य एव 'एष म आत्मा' 'एष आत्मेति होवाच' 'एष आत्माऽपहतपाप्मा' 'य आत्माऽपहतपाप्मा' इति शाण्डिल्यविद्योपकोसल-विद्यादहरविद्याप्रजापतिविद्यादिषु पठितत्वात् तत्स्थलीयो वा विवरणरूपो वाक्य-कारग्रन्थस्स्यात् । सर्वथा स वाक्यग्रन्थः नास्मत्सिद्धान्तविरोधीति बोध्यम् ।

## (४२) परकीयग्रन्थे द्रविडाचार्यभाष्यवाक्यविवरणव्याजेन तच्छिरसि स्वाभिमतार्थारोपस्य निरासः ।

वेदार्थसङ्ग्रहे द्रविडाचार्यभाष्यमन्यत्राप्यनूदितम्—'सिषाधयिषित-स्वर्गो हि स्वर्गकामः । तस्य स्वर्गकामस्य कालान्तरभाविस्वर्गसिद्धौ क्षणभङ्गिनी

यागादिक्रिया न समर्थेति चेत्, अनाघ्रातवेदसिद्धान्तानामियमनुपपत्तिः। सर्वैः कर्मभिराराधितः परमेश्वरो भगवान्नारायणः तत्तदिष्टं फलं ददातीति वेदविदो वदन्ति। यथाऽऽहुः वेदराशिविदग्रेसरा द्रविडाचार्याः—'फलसंबिभन्त्सया हि कर्मभिरात्मानं पिप्रीषन्तीति स प्रीतोऽलं फलायेति शास्त्रमर्यादा' इति। फलसम्बन्धेच्छया कर्मभिर्यागदानहोमादिभिः इन्द्रादिदेवतामुखेन तत्तदन्तर्यामिरूपेणावस्थितं इन्द्रादिशब्दवाच्यं परमात्मानं भगवन्तं वासुदेवमारिराधयिषन्ति। स हि कर्मभिराराधितः तेषामिष्टानि फलानि प्रयच्छतीत्यर्थः।' इति। 'फलसंबिभन्त्सया' इति द्रविडभाष्यं गीताभाष्यतात्पर्यचन्द्रिकायां न्यायसिद्धाञ्जने चानूदितम्।

अत्रास्मत्सिद्धान्तविरोधो न कोऽपि। अत्र स्वकीयसिद्धान्तप्रवर्तकमूलाचार्यत्वेनाभिमतानां द्रविडाचार्याणां 'वेदराशिविदग्रेसरा द्रमिडाचार्याः' इति महती प्रशंसा कृता। वस्तुतः अद्वैताचार्याणां तेषां परैः क्रियमाणप्रशंसामङ्गीकुर्मः। अस्मदाचार्यस्यैव तथा अज्ञानात् परप्रशंसा। सन्तुष्यतु परः। परमात्मा नारायण एव न महेश्वरः। स च इन्द्रादिशब्दवाच्यः शरीरशरीरिभावाभ्युपगमात्, शरीरवाचकानां शरीरिपर्यन्तत्वव्युत्पत्तेः, इत्यादिपरकीयसिद्धान्तस्तु सर्वथा द्रविडाचार्याणां नाभिमतः। द्रविडाचार्याणां तादृशार्थबोधकवाक्याभावात्। परस्य तदीयवाक्यविवरणव्याजेन स्वसिद्धान्तस्य तदभिमतत्वापादनात् प्रामाणिकः न मोहं प्राप्नुयादिति तु अवश्यं विज्ञेयं परेण इति आवेद्यते। यच्च वेङ्कटनाथेन स्वीयतत्वमुक्ताकलापान्तर्गतस्य 'वैदिकस्वीकृततत्वम्' इत्यंशस्य विवरणावसरे सर्वार्थसिद्धौ 'वेदविदुत्तमैः सर्वैः बोधायनटंकद्रमिडगुहदेवकपर्दिभारुचिप्रभृतिभिः भगवत एव परत्वेनाङ्गीकृतत्व'मित्युक्तम्। तत्तुच्छं, वाक्यभाष्यग्रन्थयोः तथाऽनुपलम्भात्। अशिवावहं अशुद्धं स्वकीयं शिवद्वेषित्वं परमपरिशुद्धे द्रविडाचार्येऽपि आरोपयति वेङ्कटनाथः। अहो तस्य धाष्टर्यम्।

## (४३) परानूदितद्रविडाचार्यवाक्यानां सिद्धान्ताविरोधनिरूपणम् ।

वेदार्थसङ्ग्रह एवान्यत्रापि द्रमिडाचार्यवाक्यानुवादः दृश्यते—'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्याद्यनेकविधाः श्रुतयस्सन्ति । यथोक्तं द्रमिडभाष्ये—'तस्याज्ञया धावति वायुः ; नद्यस्स्रवन्ति, तेन च कृतसीमानो जलाशयाः समदा इव मेषविसर्पितं कुर्वन्ति ।' इति, 'तत्सङ्कल्पनिबन्धना हीमे लोकाः न च्यवन्ते । न स्फुटन्ते । स्वशासनानुवर्तिनं ज्ञात्वा कारुण्यात् स भगवान् अनुगृह्णाति, वर्धयेत त तत् विद्वान् कर्मदक्षः' इति च' इति ।

अत्र तात्पर्यदीपिकायां 'मेषविसर्पितं—उज्जृम्भणं जलोन्नतिः, जलाशयास्समुद्राः, कृतसीमान एव मेषविसर्पितं कुर्वन्ति । नत्वतिलङ्घितसीमान इत्यर्थः ।' इति । इदं 'स्वशासनानुवर्तिनं ज्ञात्वा' इति द्रमिडभाष्यम् न्यायपरिशुद्धौ सेश्वरमीमांसायाञ्च वेङ्कटनाथेनानूदितम् । अत्रापि नास्माकं विरोधः । द्रमिडाचार्याः छान्दोग्यवाक्यविवरणे कुत्र इत्थमुक्तवन्त इति तु तदीयग्रन्थानुपलम्भान्न ज्ञायते ।

रामानुजभाष्ये भोक्त्रापत्त्यधिकरणे द्रमिडभाष्यमनूदितम्—'यथाऽऽह द्रमिडभाष्यकारः—'यथा लोके राजा प्रचुरदन्दशूके घोरे अनर्थसङ्कटेपि प्रदेशे वर्तमानो व्यजनाद्यवधूतदेहो दोषैर्न स्पृश्यते, अभिप्रेतांश्च लोकान् परिपालयिष्यति, भोगांश्च गन्धादीनविश्वजनोपभोग्यान् धारयति, तथाऽसौ लोकेश्वरो भ्रमत्स्वसामर्थ्यचामरो दोषैर्न स्पृश्यते, रक्षति च लोकान् ब्रह्मलोकादीन्, भोगांश्चाविश्वजनोपभोग्यान् धारयति' इति ।

अत्र श्रुतप्रकाशिकायां—'व्यजनादीति आदिशब्देन तत्तदनिष्टनिवारणसाधनानि विवक्षितानि । भ्रमत्स्वसामर्थ्यचामर इति । अत्र चामरग्रहणं अनिष्टनिवारणानुरूपवस्तूनामुपलक्षणम् ।' इति । भोक्त्रापत्त्यधिकरणे परकीयाधिकरणरचनानुरोधेन पूर्वपक्षे ईश्वरस्य सशरीरत्वप्रयुक्तसुखदुःखादिमत्त्वप्रसङ्गे, तद्वारणार्थमिदं द्रमिडभाष्यकारवाक्योदाहरणं परस्य । सविशेषब्रह्माभ्यु-

पगन्तॄणामस्माकमपि मते परमेश्वरस्य सशरीरत्वाभ्युपगमात् प्रसक्तदोषवारणाय एवमुक्तिसम्भवान्न विरोधः। परन्तु छान्दोग्यविवरणवाक्यग्रन्थभाष्यरूपे स्वकीय-ग्रन्थे कुत्र द्रविडाचार्यैरेवमुक्तमिति गवेषणीयम्। पुस्तकालाभे मूकीभावेन स्थातव्यम्। ब्रह्मसूत्राणां स्वातन्त्र्येण विवरणात्मना वा, ब्रह्मसूत्रविवरणार्थवाक्य-ग्रन्थविवरणरूपतया वा, बोधायनीयवृत्तिविवरणरूपतया वा द्रमिडाचार्यैर्ग्रन्थः कोपि न कृत इति तु तत्र प्रमाणाभावात् सुधीरमुद्घोषयामः।

रामानुजभाष्ये देवताधिकरणे 'गुणकथनेन हि स्तुतित्वम्। गुणानाम-सद्भावे स्तुतित्वमेव हीयेत, नचासता गुणेन कथितेन प्ररोचना जायते। अतः कर्म प्ररोचयन्तो गुणसद्भावं बोधयन्त्येवार्थवादाः' इत्युक्तम्। अत्र श्रुतप्रका-शिकायां—'नचासतेति। अनेन 'नासता स्तुतिरुपपद्यते' इति द्रमिडभाष्यं स्मार्यते' इत्युक्तम्। सेश्वरमीमांसायां यामुनस्तोत्रभाष्ये च वेङ्कटनाथेनापि इदं द्रमिड़भाष्यं अनूदितम्, तत्रासदर्थवादानामपि श्रुतिषु बहुलमुपलम्भात् मीमांसा-शास्त्रे व्यवहृतत्वाच्च रामानुजभाष्यं चिन्त्योपपत्तिकम्॥

## (४४) रुद्ररोदनार्थवादो भूतार्थवाद इति वेङ्कटनाथोक्तेः देवताद्वेषमूलकत्वम्।

यच्च सेश्वरमीमांसाभिधे वेङ्कटनाथेन कल्पिते ग्रन्थे उक्तम्—'यत्तु परेषां स्वार्थेष्वपि रुद्ररोदनादिवाक्यानां गुणवादाश्रयणं तदयुक्तम्, रुद्रस्य रोदनादिसम्भवस्य दर्शितत्वात्।' इति। तत् तदीयदेवताविद्वेषधाष्टर्यादिमूलकं प्रामाणिकैरुपेक्ष्यम्॥

## (४५) अदृष्टवाक्यभाष्यादिग्रन्थसुदर्शनवेङ्कटनाथाभ्यामुक्ते द्रमिडभाष्यादिवाक्ये अविश्वासः।

अत्र रामानुजभाष्यकारानुदाहृतं किञ्चित् द्रमिडभाष्यकारवाक्यं 'नासता स्तुतिरुपपद्यते' इत्येतत् स्वयमदृष्टवाक्यद्रमिडादिग्रन्थः सुदर्शनः वेङ्कटनाथो

वा कथमुदाजहार इति पर्यालोचने चित्रीयते मनः। सुदर्शनः स्वमनीषिकयैव सर्वं कल्पयेत्। वेदव्यासापराभिधानो हि सः। आर्षज्ञानेन पश्यन् कदाचित् ब्रूयात्। न केवलं द्रमिडभाष्यकारवचः, वाक्यकारवचनमपि रामानुजभाष्यकारानुदाहृतं स्वयमुदाहरति सुदर्शनः श्रुतप्रकाशिकायाम्—'पाप्मानः कालजरामृत्युशोकादयः सङ्ख्यातत्वात्' इति वाक्यकारवचः' इति। 'नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युः न शोकः न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति श्रुत्या सङ्ख्यातत्वं बोध्यम्।

यद्यपि रामानुजार्येण भाष्ये अनुदाहृतमपि 'नासता स्तुतिरुपपद्यते' इति द्रमिडभाष्यकारवाक्यं वेदार्थसंग्रहे उदाहृतम्—'यथोक्तं द्रमिडभाष्ये—'ऋणं हि वै जायते' इति श्रुतेः' इत्युपक्रम्य, यद्यप्यवदानस्तुतिपरं वाक्यम्, तथाऽपि नासता स्तुतिरुपपद्यते' इति। तात्पर्यदीपिकायां 'विध्युपयोगित्वेन अर्थवादानामपि स्वार्थे प्रामाण्ये द्रमिडाचार्यग्रन्थमाह–यथोक्तम्, इति' इत्यवतारितश्च। तथापि द्रमिडभाष्ये कस्मिन् प्रकरणे इदं वाक्यमुक्तं इति न ज्ञायते ग्रन्थानुपलंभात्। वेदार्थसंग्रहेऽपि प्रकरणं न निर्दिष्टम्। तात्पर्यदीपिकायामपि नोक्तम्। प्रकरणानिर्देशेऽपि, पूर्वमुदाहृतद्रमिडभाष्यवाक्यान्तराणामिव यदि अबाधितार्थकत्वं स्यात् तदा इदमपि द्रमिडभाष्यवाक्यमिति संभावना जायेत, न तु तथा अबाधितार्थकत्वमस्ति। प्रजापतिकर्तृकात्मवपोत्खननाद्यसदर्थवादैरपि कर्मस्तुतिदर्शनात् 'नासता स्तुतिरुपपद्यते' इति वाक्यं बाधितार्थकं भवति। यद्यपि च 'मन्त्रार्थवादगता ह्यविरुद्धा अपूर्वाश्च अर्थाः सर्वे विधिशेषतयैव सिद्धा भवन्ति' इति पूर्ववाक्ये वेदार्थसंग्रह एव अविरुद्धपदेन असदर्थवादवारणं कृतम्, तथापि 'नासता स्तुतिरुपपद्यते' इति वाक्यस्य बाधितार्थकत्वं तावता परिहर्तुं न शक्यत एव, असताऽपि स्तुतिदर्शनात्। इत्थं बाधितार्थकं वाक्यं कथं प्रामाणिको भगवान् द्रविडाचार्यो वदेत्। तस्मात् अस्य वाक्यस्य द्रमिडभाष्यान्तर्गतत्वं न संभवत्येव। परैः स्वस्य प्रामाणिकत्वप्रकटनाय परं द्रमिडभाष्यवाक्यत्वमारोपितमिति तर्क्यते। सुदर्शनवेङ्कटनाथावदृष्टवाक्यादिग्रन्थावित्येतत् अनुपदमेव स्फुटीकरिष्यते।

## (४६) रामानुजोदाहृतद्रमिडभाष्यवाक्यान्तराविरोधः ।

रामानुजभाष्ये—'द्रमिडभाष्यकारश्च 'देवतासायुज्यादशरीरस्यापि देवतावत् सर्वार्थसिद्धिस्स्यात्' इत्याह'इत्युक्तम् । श्रुतप्रकाशिकायां—'द्रमिडेति । अशरीरः मुक्तः । कर्मकृतशरीराभावात् । सिद्धिः अनुभवः' इत्युक्तम् ।

अत्र सगुणसायुज्यलक्षणामपरमुक्तिं उपासकस्य ब्राह्मलौकिकभोगश्चाङ्गी-कुर्वाणानामस्माकं नैतद्विरुद्धम् । 'तन्वभावे सन्ध्यवदुपपत्तेः' इति ब्रह्मसूत्र-पर्यालोचने अशरीरस्यापि भोगसम्भवेन 'कर्मकृतशरीराभावात्' इति सुदर्शनस्य व्याख्यानं अकर्मकृतशरीरसद्भावबोधकमनपेक्षितम् ।

## (४७) रामानुजभाष्ये जिज्ञासाधिकरणे उदाहृतानां बहूनां वाक्यकारभाष्यकारवाक्यानां उपासनासंबन्धिनामविरोधः ।

रामानुजभाष्ये जिज्ञासाधिकरणे वाक्यकारवाक्यानि बहून्युदाहृतानि—'वाक्यकारेणैतत्सर्वं प्रपञ्चितम्—'वेदनमुपासनं स्यात् तद्विषये श्रवणात्' इति सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम् । 'सकृत् प्रत्ययं कुर्यात् शब्दार्थस्य कृतत्वात् प्रयाजादिवत्' इति पूर्वपक्षं कृत्वा, 'सिद्ध-न्तूपासनशब्दात्' इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम् । 'उपासनं स्यात् ध्रुवानुस्मृतिः दर्शनान्निर्वचनाच्च' इति तस्यैव वेदनस्य उपासनारूपस्य असकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम् । सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता । 'दर्शनरूपता च प्रत्यक्षतापत्तिः ।' इति ।

अत्र श्रुतप्रकाशिकायां उक्तम्—'अथ सूत्रकाराभिप्रायविदां वचनं दर्शयति—वाक्यकारेणेति । एतत्सर्वमिति । सूत्रकारेण कण्ठोक्तमभिप्रेतञ्चेत्यर्थः । प्रपञ्चितमिति, पूर्वपक्षसिद्धान्तरूपेणोक्तमित्यर्थः । प्रपञ्चनञ्च 'वेदनमुपासनं स्यात्' इत्यादिना वाक्यचतुष्टयेन । वाक्यमेकैकं व्याचष्टे—सर्वा-सूपनिषत्सु इति । न केवलं छान्दोग्य इत्यर्थः । सिद्धन्तु-सिद्धान्त-स्त्वित्यर्थः । यद्वा-वेदनमुपासनं सिद्धमित्यर्थः । उपासनशब्दादित्येतद्व्याचष्टे—

वेदनमसकृदावृत्तमिति । अस्याविच्छिन्नस्मृतिसन्ततिरूपत्वं सूत्रकाराभिप्रेतं वाक्यकारेण कण्ठोक्तञ्च दर्शयति—उपासनं स्यादिति । दर्शनात्-लोके दर्शनात् । निर्वचनात्-श्रुतिवाक्यात् ।' इति ।

अत्र उपासनं अपरमोक्षहेतुत्वेनास्मत्सिद्धान्तेप्युक्तमिति न विरोधः । परममोक्षसाधनमुपासनमिति परस्य भ्रमः । अत्र 'सूत्रकाराभिप्रायविदाम्' इति श्रुतप्रकाशिकायां वाक्यकारः महीक्रियते । तत्त्वटीकादिष्वपि स एवमेव महीक्रियते । अस्मदीयाचार्यस्य वाक्यकारस्य परैर्महीकरणमस्मदभिमतमेव । सूत्रकाराभिप्रायविदामिति विशेषणेन वाक्यकारः ब्रह्मसूत्रोपरि स्वातन्त्र्येण वा बोधायनवृत्तिसंक्षेपात्मना वा ग्रन्थं कृतवानिति परैः सूच्यते । तत्तु असम्भवात् प्रमाणाभावाच्च न मृष्यामहे । नच तेन वाक्यकारस्तुतिर्भवेत्, 'नासता स्तुतिरुपपद्यते' इति द्रमिडभाष्यसारकात् 'न चासता गुणेन कथितेन प्ररोचना जायते' इति देवताधिकरणीयरामानुजभाष्यवचनात् । 'सर्वासूपनिषत्सु मोक्षसाधनतया विहितम्' इति रामानुजभाष्यवचनव्याख्यानसमये श्रुतप्रकाशिकायां 'सर्वासूपनिषत्सु इति, न केवलं छान्दोग्ये इत्यर्थः' इति विवृतत्वेन च सूच्यते वाक्यकारः छान्दोग्यमेव व्याख्यातवानिति ।

रामानुजभाष्य एव पश्चात् वाक्यकारद्रमिडभाष्यकारवचनानि बहून्युदाहृतानि—'वाक्यकारश्च ध्रुवानुस्मृतेः विवेकादिभ्य एव निष्पत्तिमाह—'तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवात् निर्वचनाच्च' इति । विवेकादीनां स्वरूपञ्चाह—'जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेकः' इति । अत्र निर्वचनं—'आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृति'रिति । 'विमोकः कामानभिष्वङ्गः' इति । 'शान्त उपासीते'ति निर्वचनम् । 'आरम्बणसंशीलनं पुनः पुनरभ्यासः' इति । निर्वचनञ्च स्मार्तमुदाहृतं भाष्यकारेण—'सदा तद्भावभावितः' इति । 'पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया' इति । निर्वचनं—'क्रियावानेष ब्रह्मविदां वरिष्ठः' 'तमेतं वेदानुव-

चनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति च। 'सत्यार्जव-दयादानाहिंसानभिध्याः कल्याणानि' इति। निर्वचनम्—'सत्येन लभ्यः' 'तेषामेवैष विरजो ब्रह्मलोकः' इत्यादि। 'देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः' इति। तद्विपर्ययोऽनवसादः। निर्वचनं—'नायमात्मा बलहीनेन लभ्यः' इति। 'तद्विपर्ययजा तुष्टिरुद्धर्षः' इति। तद्विपर्ययोऽनुद्धर्षः। अतिसन्तोषश्च विरोधीत्यर्थः। निर्वचनमपि—'शान्तो दान्तः' इति। एवं नियमयुक्तस्य आश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति।' इति। देशकालेत्यादिवाक्यं तात्पर्यचन्द्रिकायामप्यनूदितम्।

अत्र श्रुतप्रकाशिकायां विवरणम्—'उक्तं कर्मणो विद्याङ्गत्वं उपासनस्य शमाद्यङ्गकत्वविरोधात् नोपपद्यत इत्याशङ्क्य, विरोधं परिजिहीर्षुः तद्विषयश्रुतिवाक्यप्रदर्शनेनाप्रामाणिकताञ्च परिजिहीर्षुराह—वाक्येति। सूत्रकाराभिप्रायज्ञैरप्युक्तमिति भावः। वाक्यकारग्रन्थ उपादीयते तल्लब्धिरिति। संभवात्—उपपन्नत्वात्, निर्वचनाच्च—श्रुतिवचनाच्च। प्रमाणोपपत्तिभ्यामित्यर्थः। आहारविषयविवेचनं विवेकशब्देन विवक्षितं भवति। दुष्टाहारात् सात्विकाहाराणां विवेचनं विवेकः। जातिदुष्टाः कलञ्जगृञ्जनादयः। आश्रयः द्रव्यस्वामी पुरुषः। अभिशस्तपतितचण्डालादिद्रव्यमाश्रयदुष्टम्। उच्छिष्टकेशाद्युपहतं निमित्तदुष्टम्। एतत्त्रिविधदोषरहिताहारविवेचनफलभूतकायशुद्धौ विवेकशब्दः उपचरितः। यद्वा विविक्ताहारसेवया राजसतामसाहाराप्यायितदेहात् स्वदेहस्य विवेचनं विवेकः। अशुद्धेभ्यो विवेचनं हि शुद्धिः। इतिशब्दो (रामानुज) भाष्यकारीयः। 'अत्र निर्वचन'मिति च भाष्यग्रन्थः। निर्वचनं—निष्कृष्टवचनम्, अप्रमाणेभ्यो निष्कृष्टं प्रमाणभूतं वचनमित्यर्थः। 'आहारशुद्धा' वित्यादिनिर्वचनम्। विमोकः—कामानभिष्वङ्गः। विषयमभुक्त्वा स्थातुं न शक्नोति येन स विकारोऽभिष्वङ्गः। 'कामात् क्रोधोऽभिजायत' इत्यादिवचनात् क्रोधाद्यभावश्चात्र फलितः।

'शान्त उपासीते'ति निर्वचने शान्तशब्देन रागद्वेषाद्यभावो विवक्षितः। आरम्बणं आलम्बनं शुभाश्रयः, तस्य संशीलनम्। 'निर्वचनञ्च स्मार्तमुदाहृतं भाष्यकारेणे'त्यनेन पूर्वोपात्तनिर्वचनान्यपि द्रमिडभाष्योक्तानीति ज्ञायते।'

सुदर्शनकृतश्रुतप्रदीपिकाख्यरामानुजभाष्यटीकायामपि — 'भाष्यकारो द्रमिडाचार्यः। अतः सर्वं निर्वचनं तेन दर्शितमिति विज्ञायते' इत्युक्तम्। अत्रैव तत्वटीकायां—'अत्र भाष्यकारः ब्रह्मनन्दिवाक्यव्याख्याता द्रमिडाचार्यः। तेनान्येषु श्रुतिरुदाहृता, अत्र तु स्मृतिः। अथवा, अन्यत्र वाक्यकारेणैव श्रुतिरुदाहृता, अत्र तु भाष्यकारेणैव स्मृतिरिति' इति व्याख्यातम्। 'अथ मुनि'रिति श्रौतं निर्वचनम्, तस्य न्यायोपन्याससापेक्षत्वेन 'सहकार्यन्तरविधि'रित्यधिकरणे व्याख्येयत्वात् स्मार्तनिर्वचनस्य स्पष्टार्थत्वाच्च स्मार्तनिर्वचनमुदाहृतम्। 'तस्मात् सर्वेषु कालेषु मामनुस्मरे'त्येवमन्तं वचनमिहाभिप्रेतम्। 'क्रियावानेष' इति सन्रहितवचनम्। (सङ्ग्रहवचनम्) क्रियाशब्दार्थविशदीकरणायाह—तमेतमिति। अभिध्या—परकीये स्वत्वबुद्धिः। यद्वा निष्फलचिन्ता। अथवा परकृतापकारचिन्ता। तद्राहित्यमनभिध्या। अनवसादानुद्धर्षयोः अवसादोद्धर्षविपर्ययरूपत्वात् अवसादोद्धर्षलक्षणमात्रमुक्तं वाक्यकारेण। तद्विपर्ययरूपो नञर्थोऽर्थात् सिध्यतीति वाक्यकाराभिप्रायः। शोकनिमित्तं वस्तु अतीतपुत्रमरणादि। आदिशब्देन भयनिमित्तमागामि विवक्षितम्। अतीतविषयो हि शोकः। आगामिविषयञ्च भयम्। अभास्वरत्वमिति दैन्यशब्दविवरणम्। अभीष्टकार्यप्रवृत्त्यक्षमत्वरूपं दैन्यमित्युक्तं भवति। तद्विपर्यय इत्यादिर्भाष्यग्रन्थः। बलहीनेन—मनोबलहीनेन। तद्विपर्ययजा—देशकालसाद्गुण्यप्रियवस्त्वाद्यनुस्मृतिजा तुष्टिरुद्धर्षः। इत्येतावदेव वाक्यम्। तद्विपर्ययोऽनुद्धर्ष इत्यर्थसिद्धम्। न केवलमसन्तोष एव विरोधी। अतिसन्तोषश्च विरोधीति चार्थः।' इति श्रुतप्रकाशिकायामुक्तम्॥

'आरम्बणसंशीलनं पुनःपुनरभ्यासः' इति वाक्यकारवचनं गीताभाष्य-तात्पर्यचन्द्रिकायामप्युदाहृतम् । एवं 'तल्लब्धि'रिति वाक्यकारवचनमपि तात्पर्यचन्द्रिकायामनूदितम् । अत्र उदाहृतवाक्यकारभाष्यकारवचनानि ध्रुवानु-स्मृतिरूपोपासनाकर्मसमुच्चयाङ्गीकर्तृणामस्माकं न विरुद्धानि । सूत्रकाराभिप्रायज्ञै-रप्युक्तमिति श्रुतप्रकाशिकाकारस्य उक्तेरभिप्रायः पूर्वमेव निरस्तः ।

## (४८) रामानुजार्येण स्वसिद्धान्तानुगुणतया श्रौतनिर्वचना-न्युदाह्रियन्ते न तानि वाक्यकारेण भाष्यकारेण वा उदाहृतानि ।

'पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया' इति, निर्वचनम्—'क्रिया-वानेष ब्रह्मविदां वरिष्ठः' 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेने'ति च इत्युक्तम् । तत्र ब्रह्मविदां वरिष्ठः इति मुण्डको-पनिषदि तत्वज्ञानी उक्तः न तूपासकः, तस्य च पञ्चमहायज्ञाद्यनुष्ठानं न सम्भवति, ज्ञानकर्मसमुच्चयनिषेधात् । तस्मात् ब्रह्मविदां वरिष्ठस्य यत् क्रिया-वानिति विशेषणं तस्य ज्ञानध्यानादिक्रियावान् इत्यर्थः । विविदिषन्तीत्यत्र च वेदनं तत्वज्ञानं न तूपासनम् , प्रकरणात् । तस्मात् उपासकस्य पञ्चमहायज्ञाद्य-नुष्ठानक्रियाबोधकवाक्यकारवाक्योक्त्यनन्तरं 'निर्वचनं क्रियावानेष' इत्यादि-निर्वचननिरूपकग्रन्थः असमञ्जसः । निर्वचनञ्चैतत् रामानुजभाष्यकारस्य स्वसिद्धा-न्तानुसारि प्रदर्शितम् । नेदं वाक्यकारद्रविडाचार्यसम्मतम् ।

'निर्वचनञ्च स्मार्तमुदाहृतं भाष्यकारेण' इति हि रामानुजभाष्यम् । तेन, तत्पूर्वं पश्चाच्च निर्वचनोदाहरणं स्वकीयमिति ज्ञायते । तस्मादेव रामानुज-भाष्यकारः स्वसिद्धान्तानुसारेण स्वेष्टनिर्वचनानि उदाहरति । श्रुतप्रकाशिकाया-मपि 'इतिशब्दो भाष्यकारीयः, अत्र निर्वचनमिति च भाष्यग्रन्थः' इत्युक्त्या निर्वचनानि सर्वाणि स्मार्तनिर्वचनव्यतिरिक्तानि रामानुजभाष्यकारीयाणीति स्पष्टमावेदयति ।

## (४९) रामानुजभाष्योदाहृतश्रौतनिर्वचनानां अन्येषां वाक्यानां च वाक्यकारीयत्वं भाष्यकारीयत्वं वेति विषये सुदर्शनवेङ्कटनाथयोस्संदिग्धोक्त्या तयोर्वाक्यकारादिग्रन्थादर्शित्वनिर्णयः।

यद्यपि अत्र श्रुतप्रकाशिकाकारः 'निर्वचनञ्च स्मार्तमुदाहृतं भाष्यकारेण' इत्यनेन पूर्वोपात्तनिर्वचनान्यपि द्रमिडभाष्योक्तानीति ज्ञायते' इति वदति। स एव श्रुतप्रदीपिकायां स्वकृतायामेव रामानुजभाष्यटीकायां 'भाष्यकारोऽत्र द्रमिडाचार्यः। अतः सर्वं निर्वचनं तेन दर्शितमिति विज्ञायते' इत्याह। तथापि न तन्निर्णायकम्। यतः तेन वाक्येन स्वयं द्रमिडभाष्यं न दृष्टवान् स इति स्पष्टं प्रतीयते। स्वेन द्रमिडभाष्यस्य दृष्टत्वे, तानि रामानुजभाष्ये पूर्वोपात्तानि निर्वचनानि द्रमिडभाष्ये दृश्यन्ते। अतः द्रमिडभाष्योक्तान्येव तानीति असन्दिग्धं वदेत्। नतु 'निर्वचनञ्च स्मार्तमुदाहृतं भाष्यकारेणे'त्यनेन रामानुजभाष्यवाक्येन हेतुना पूर्वोक्तनिर्वचनान्यपि द्रमिडभाष्योक्तानीति ज्ञायते—अनुमीयते इति वदेत्। हेतुरपि अनैकान्तिकः, पूर्वेषां श्रौतनिर्वचनानां सर्वेषां रामानुजभाष्यकारेणोक्तत्वेऽपि द्रमिडभाष्यानुक्तत्वेपि 'सदा तद्भावभावितः' इति स्मार्तं निर्वचनं द्रमिडभाष्यकारेण उक्तम्, अन्यानि श्रौतानि निर्वचनानि मया उक्तानीति रामानुजभाष्यकारस्य उक्तिसम्भवात्।

अत्र वेङ्कटनाथः तत्त्वटीकायां एवमाहास्य रामानुजभाष्यवाक्यस्यार्थम्—'अत्र भाष्यकारः ब्रह्मनन्दिवाक्यव्याख्याता द्रमिडाचार्यः। तेनान्येषु श्रुतिरुदाहृता अत्र तु स्मृतिः। अथवा, अन्यत्र वाक्यकारेणैव श्रुतिरुदाहृता, अत्रतु भाष्यकारेणैव स्मृतिरिति' इति।' अत्र च वाक्ये वेङ्कटनाथः, सर्वाण्यपि निर्वचनानि द्रमिडभाष्योक्तान्येव न तु रामानुजभाष्यकारोक्तानि कानिचिन्निर्वचनानि, परन्तु पूर्वं द्रमिडभाष्योक्तानि निर्वचनानि श्रौतानि अत्र तु स्मार्तं निर्वचनमुक्तम्, इति श्रुतप्रकाशिकानुसारिणीं प्रथमव्याख्यामुक्त्वा, अथवेति ग्रन्थेन द्रमिडभाष्यकृतापि सर्वाणि निर्वचनानि नोक्तानि, किन्तु अत्र स्मार्तं निर्वचनं परं

द्रमिडभाष्यकारैणैवोक्तम्, इतराणि पूर्वाणि पाश्चात्यानि च श्रौतानि निर्वचनानि वाक्यकारेणैव मूलग्रन्थकृता उक्तानीति श्रुतप्रकाशिकाननुसारिणीमपि द्वितीयां व्याख्यामुक्तवान् । अस्माभिरुक्तापि तृतीया व्याख्या पूर्वं प्रतिपादिता । सा चेत्थं—वाक्यकारः किमपि निर्वचनं नोवाच, द्रमिडभाष्यकारः स्मार्तं निर्वचनमेकमेवोक्तवान्, अन्यानि श्रौतानि निर्वचनानि रामानुजभाष्यकारः उक्तवान् इति । वाक्यकारः उक्तवान्वा, द्रमिडभाष्यकार उक्तवान्वा, रामानुजभाष्यकार उक्तवान्वा । भगवानेव वेद । वेङ्कटनाथो वा सुदर्शनो वा, द्रमिडभाष्यग्रन्थं वा, वाक्यकारग्रन्थं वा नैव दृष्टवान् इति स्पष्टमत्र निश्चीयते ।

एवं 'हिरण्मय इति रूपसामान्यात् चन्द्रमुखवत्' इति वाक्यं वाक्यकारीयमिति वेदार्थसङ्ग्रहव्याख्यायां सुदर्शनः वदति । वेङ्कटनाथस्तु गीताभाष्यतात्पर्यचन्द्रिकायां 'यथाहुर्द्रमिडाचार्याः—'हिरण्मय इति रूपसामान्यात् चन्द्रमुखवत्' इति, 'यद्वा हिरण्यविकारत्वव्यवच्छेदार्थं द्रमिडभाष्यम्' इति वदति, एवमुभयोर्विरोधः । उभयोः ग्रन्थद्वयमपि न दृष्टिपथगोचर इत्यनेनापि ज्ञायते । तथा 'तस्य यथा कप्यास'मिति वाक्यस्य वाक्यकारेण षडर्थाः पूर्वपक्षतया सिद्धान्तत्वेन चोक्ताः' इति श्रुतप्रकाशिकायामुक्तम् । 'तस्य यथेत्यस्य च वाक्यस्य द्रमिडभाष्योदितेषु षट्स्वर्थेषु' इति तात्पर्यचन्द्रिका । स्तोत्रभाष्येऽपि वेङ्कटनाथेन षडर्थाः द्रमिडभाष्योक्तत्वेनैव कथिताः । अनेनापि उभयोर्ग्रन्थदर्शनं नास्तीति ज्ञायते । अस्माभिः पूर्वमेव यदुक्तं—सुदर्शनवेङ्कटनाथौ वाक्यद्रमिडभाष्यग्रन्थौ न दृष्टवन्ताविति उपरि निरूपयिष्यते इति, तदिदं सुदर्शनवेङ्कटनाथग्रन्थप्रमाणत एव सम्यक् निरूपितम्, सहृदयैः सम्यगालोचनीयम् । एवं वाक्यकारद्रमिडभाष्यकारग्रन्थानवलोकनेनैव सुदर्शनवेङ्कटनाथादयः स्वीयं सिद्धान्तं साम्प्रदायिकत्वेन वाक्यद्रमिडभाष्यमूलकत्वेन च पुनः पुनः स्वीयग्रन्थेषूद्घोषयन्तीति तत्वं प्रामाणिका जानन्तु, सुदर्शनवेङ्कटनाथाभ्यां उक्तमिदं प्रामाणिकं स्यादिति भ्रान्तिं न लभन्ताम्, इत्येतद्वक्तुकामैरस्माभिः एतावल्लिखितम् । नास्मासु तत्वाविष्कारकेषु असूया कस्यापि जायतामिति प्रार्थ्यते ॥

## (५०) द्रमिडभाष्यकारेण स्मार्तनिर्वचनोदाहरणे श्रुतप्रकाशिकोक्तकारणनिरासः ।

यच्च श्रुतप्रकाशिकायां—'अथ मुनिरिति श्रौतं निर्वचनम् । तस्य न्यायोपन्याससापेक्षत्वेन 'सहकार्यन्तरविधि'रित्यधिकरणे व्याख्येयत्वात् स्मार्तनिर्वचनस्य स्पष्टार्थत्वाच्च स्मार्तनिर्वचनमुदाहृतम्' इत्युक्तम् । तत्र वदामः । 'सहकार्यन्तरविधि'रित्यधिकरणे केन व्याख्येयत्वं अभिमतम्? वाक्यकारेण वा द्रमिडभाष्यकारेण वा? उभाभ्यामपि ब्रह्मसूत्राणि न व्याख्यातानि । नापि शशश्रृङ्गायमाणबोधायनवृत्तिः संक्षिप्ता । छान्दोग्योपनिषदेव उभाभ्यां व्याख्याता । इति तत्त्वमसकृदस्माभिरावेदितम् । एवं च सहकार्यन्तरविधिरित्यधिकरणे न्यायोपन्यासपूर्वकं बादरायणाचार्येण व्याख्यातं 'अथ मुनि'रिति श्रौतं निर्वचनं किमिति द्रमिडभाष्यकारः परित्यज्य स्मार्तं निर्वचनमुक्तवान् । तस्मात् यत्किञ्चिदेतत् ।

## (५१) द्रमिडभाष्योपरि वामनटीकेति कश्चनाप्रसिद्धो ग्रन्थः परोक्तः ।

श्रुतप्रकाशिकायां तदनुसारितत्त्वटीकायाञ्च रामानुजभाष्यकारवचनमनपेक्ष्य स्वयमेव वाक्यकारद्रमिडभाष्यवाक्ये उदाहृते । 'ब्रह्मण्युपनिषण्णेत्युपनिषत्, उपनिषण्णत्वाद्वोपनिषत्' इति हि वाक्यम् । 'गहने हीयं विद्या सन्निविष्टा' इति तद्विषयं द्रमिडभाष्यम् ।' इति । न केवलं तयोरेव वाक्ये उदाहृते । 'गहने ब्रह्मण्युपनिषण्णा' इति भाष्यविषया वामनटीका' इति ग्रन्थेन द्रमिडभाष्यस्य वामनटीकापि उदाहृता । अनेन स्वस्य सटीकद्रमिडभाष्यज्ञानवत्त्वं परेण प्रकटीक्रियते । पूर्वं सुदर्शनेन वेङ्कटनाथेन च द्रमिडभाष्यवाक्यग्रन्थौ न दृष्टौ इति सहेतुकं प्रदर्शितम् । तथा वस्तुतत्त्वे स्थिते, अत्र सुदर्शनेन वेङ्कटनाथेन च वामनटीकेति काचन द्रमिडभाष्यटीकापि स्वयं दृष्टा इति घुष्यते । का नामेयं वामनटीका? किं गुहदेवकृतटीकातो भिन्ना, उत सैव वा? गुहदेवोऽपि किल कश्चिदाचार्यः यामुनाचार्येणापि सिद्धित्रये अनुक्तः 'भगवद्बोधायन-

टङ्कद्रमिड्गुहदेवकपर्दिभारुचिप्रभृती'ति वेदार्थसङ्ग्रहे, 'टङ्कद्रमिडगुहदेव-प्रभृतय' इति यतिराजसप्ततौ, 'व्यासबोधायनगुहदेवभारुचिब्रह्मनन्दिद्रमिडा-चार्यश्रीपराङ्कुशनाथयामुनमुनियतीश्वरप्रभृतीनाम्' इति यतीन्द्रमतदीपिकायां महाचार्यप्रियशिष्येण विरचितायाञ्च निर्दिष्टः गतानुगतिकतया परैस्सर्वैरपि निर्दिश्यते। यतीन्द्रमतदीपिकानिर्दिष्टक्रमानुसारात् ब्रह्मनन्दिद्रमिडाचार्यादिभ्योऽपि गुहदेवाचार्यः कदाचित् पूर्वाचार्यस्स्यात् इति ज्ञायते।

अस्माकं वस्तुतः ग्रन्थकर्तृत्वेन प्रसिद्धवाक्यकारद्रमिडाचार्ययोरपि ग्रन्था नोपलभ्यन्ते दैवदुर्विपाकात्। परेषां गुहदेवटीका वामनटीकेत्यादयः अप्रसिद्धा अपि ग्रन्थाः उपलभ्यन्ते। अहो परेषां भाग्यधोरणी। 'उपनिषण्णं वा अस्यां परं श्रेय इत्युपनिषत्' इति भगवत्पादा अपि परेण पूर्वमुक्तवाक्यग्रन्थोक्तमर्थ-मनूदितवन्तः तैत्तिरीयोपनिषद्भाष्ये। तत् दृष्ट्वा कदाचित् श्रुतप्रकाशिकाकारः तत्समानार्थकं वाक्यग्रन्थमभ्यूह्य द्रमिडभाष्यवाक्यवामनटीकावाक्यद्वयमपि कल्पयित्वा व्यवहृतवान् स्यात्, वेङ्कटनाथश्च सुदर्शनमनुसृत्य स्वयमपि तथा लिखितवानिति तर्क्यते।

## (५२) सुदर्शनवेङ्कटनाथाभ्यां मीमांसान्यायकोशकारीयमङ्गलस्य द्रमिडभाष्यकारीयत्वारोपादपि तयोर्द्रमिडभाष्यादर्शित्वनिर्णयः।

इदञ्चान्यत् अत्याश्चर्यरूपं श्रुतप्रकाशिकाकारतत्त्वटीकाकारयोर्लीलायितं सावधानैः सहृदयैः श्रोतव्यम्—श्रुतप्रकाशिकायामुपक्रमे उक्तम्—'परदेवतो-पासनानन्तरभावित्वं गुरूपासनस्य युक्तं, पूर्वैरपि तथा आचरितं, यथा च द्रमिडाचार्यैः—'नमः प्रवरगुणैकास्पदाय स्थिरत्रसकुलबीजकुम्भभूताय भुवनको-शस्य गोप्त्रे ब्रह्मणे, नमो जैमिनये वेदरहस्यसंपुटनिगूढविष्फारयित्रे न्यायप्रज्वलित-चेतसे, नमोऽस्त्वाचार्येभ्यः' इति। तत्त्वटीकायामपि 'द्रमिडभाष्यादिषु 'नमः प्रवर....आचार्येभ्यः' इत्यादिभ्यः तद्दृष्टेश्चावश्यकर्तव्य एवायमाचारः' इत्युक्तम्।

मीमांसापादुकायामपि वेङ्कटनाथः 'नत्वा नुत्वैनमाह द्रमिडगुरुरपि ब्रह्मविद्वाक्य-भाष्यम्' इति पद्येन इदं मङ्गलं द्रमिडाचार्यकृतमभिप्रैति ।

अत्रोच्यते—उभाभ्यामपि सुदर्शनवेङ्कटनाथाभ्यां द्रमिडभाष्यविषये प्रणव एव विस्वरः कृतः । यदिदं द्रमिडभाष्यकारैः मङ्गलं कृतमिति,—'नमः प्रवरे'त्यादिवाक्यं प्रदर्शितं ताभ्यां, तदिदं द्रमिडभाष्यकारस्य न मङ्गलम् । अपि तु प्रभाकरमतानुसारिशालिकनाथभवनाथमतद्वयोद्धाररूपे मीमांसान्यायकोशाभिधे अद्यावधि अमुद्रिते मद्रपुर्यामवस्थितातिप्राचीनपुस्तककोशसंरक्षणालये संरक्षिते पत्रलिखिते (15725) तमाङ्कवति प्राचीनग्रन्थे प्रारम्भे इदं मङ्गलं एवमानु-पूर्व्यैव दृश्यते । तत्र जैमिन्यनन्तरं शबरस्वामिप्रभाकरशालिकनाथभवनाथाना-मपि वन्दनं कृतम् ।

एतत्तत्वाववोधाय मीमांसान्यायकोशोपक्रमस्थानि इमानि वचनानि लिख्यन्ते—

'नमः प्रवरगुणैकास्पदाय स्थिरत्रसकुलबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे ।

नित्योदारगुणैश्वर्यरूपभोगादिसम्पदे ।
विविधाङ्गाय वेदान्तवेद्याय ब्रह्मणे नमः ।

नमो जैमिनये वेद (रहस्य) संपुटनिगूढविष्फारयित्रे न्यायप्रज्वलितचेतसे, नमोऽस्त्वाचार्येभ्यः ।

नानान्यायमहारत्ननिधिर्भाष्यमहोदधिः ।
क्लृप्तो येन नमस्तस्मै शबरस्वामिवेधसे ॥
सृष्टाविद्यानिशाध्वंसिनिबन्धमयवासरम् ।
उज्ज्ञासितजगज्जाड्यं नमस्यामः प्रभाकरम् ॥
नमश्शालिकनाथाय पुंसे टीकाद्वयार्णवे ।
पञ्चिकामृतमू(नौ)र्येन कृता तस्मै महीयसे ॥

ध्वस्तान्यदृष्टिसंसिद्धप्रक्रियापञ्चिकाद्वयम् ।
भवनाथगुरुं वन्दे न्यायोपादानविग्रहम् ॥
गुरुक्रमागतज्ञानप्रवाहैकप्रयोजनः ।
नाथद्वयमतोद्धारो न्यायकोशो निबध्यते ॥' इति ।

मीमांसकप्रणीतत्वादेव आचार्यमध्ये प्रथमतः जैमिनेः नमस्कारः । पश्चात् शबरादीनामपि नमस्कारः कृतः । व्यासादीनां विशिष्य वन्दनं न कृतम् । अस्य मङ्गलस्य द्रमिडाचार्यकृतत्वे छान्दोग्योपनिषद्व्याख्यात्रा वेदान्तिना तेन व्यासाचार्याणां नमस्कारमकृत्वा, तन्नामापि विशिष्यानिर्दिश्य, जैमिनि-मात्रस्य विशिष्य अन्येषां सामान्यतश्च नमस्कारकरणं कथमुपपद्यते? परेषाञ्च मते बादरायणीयब्रह्मसूत्राणामुपरि विस्तृताया बोधायनवृत्तेः संक्षेपकारी द्रमिडा-चार्यः कथं बादरायणाचार्यं बोधायनमहर्षिं वा न नमस्कृतवान्? ब्रह्मसूत्रस्या-सम्बन्धिनं जैमिनिमेव कथं नमस्कृतवान्?

'नत्वा नुत्वैनमाह द्रमिडगुरुरपि ब्रह्मविद्वाक्यभाष्य'मिति मीमांसापा-दुकोक्तरीत्या जैमिनिं नत्वा नुत्वा च वाक्यभाष्यमुक्तवान् ब्रह्मवित् द्रमिडा-चार्यः कथं ब्रह्मविदग्रेसरं बादरायणं नत्वा नुत्वा च नोपक्रान्तवान् वेदान्तवाक्य-भाष्यम्? पर्यालोचयतु निपुणं सुदर्शनो वेङ्कटनाथो वा तद्भक्तो वा । कथमन्य-दीयमङ्गलं अन्यस्योपरि निक्षिपति परः । द्रमिडभाष्यग्रन्थादर्शिनौ सुदर्शन-वेङ्कटनाथाविति विषये इतःपरं किं वा प्रमाणं प्रदर्शनीयम् । केनाप्यन्येन उच्चार्यमाणं मङ्गलं श्रुतवन्ताविमौ, इदं कस्य मङ्गलमित्यपि अविमृश्यैव, तत्र ब्रह्मणस्सगुणत्ववर्णनश्रवणमात्रतृप्तौ द्रमिडभाष्यमङ्गलमिदमिति महति ग्रन्थे लिखितवन्तौ । ग्रन्थस्य मङ्गलस्य वा आनुरूप्यमस्ति वा न वा इत्यपि किल ताभ्यां अभिनिवेशवशीकृतचेतोभ्यां न पर्यालोचितम् ।

कदाचित् तद्रीत्या बोधायनो महर्षिः विंशतिलक्षणीवृत्तिकारस्स्यात्, अतो विंशतिलक्षणीवृत्तिग्रन्थसंक्षेपग्रन्थकर्तारौ वाक्यकारद्रमिडाचार्यौ भवेतां वा?

येन द्रमिडभाष्यकारस्य जैमिनिवन्दनमुपपद्येत। तदापि जैमिनिवत् बादरायणस्यापि नमस्कारं कुतो न द्रमिडाचार्यः कृतवान् मङ्गले ? इति पर्यालोच्यताम्।

## (५३) बोधायनः विंशतिलक्षणीवृत्तिकृदिति ऐतिह्यमुखेन वेङ्कटनाथेन स्थापनम्।

वेङ्कटनाथः सेश्वरमीमांसायां 'उभया (जैमिनिबादरायणा) भिप्रायवेदी भगवान् बोधायनः विंशतिलक्षणीं मीमांसां परस्परसङ्गमार्थं विस्तरेण व्याख्यदिति वृद्धा विदामासुः' इति ग्रन्थेन बोधायनस्य विंशतिलक्षणीव्याख्यातृत्वमपि ऐतिह्यमुखेन बोधयति। परेषां वितथैतिह्यसहस्रवर्णयितृत्वे इदमप्येकमुदाहरणम्। वस्तुतस्तु बोधायनः ब्रह्मसूत्रवृत्तिमेव कृतवानित्युक्तं रामानुजार्येण। 'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः' इत्येव किल रामानुजार्यो वदति। भगवान् उपवर्ष एव च विंशतिलक्षणीवृत्तिकारः। एतत्तु परस्यापि सम्मतम्। 'एक आत्मनश्शरीरे भावा'दिति सूत्रविवरणस्थले 'शारीरके वक्ष्याम' इति वृत्तिकारोक्तिस्तु' इति वदन् सुदर्शनः उपवर्षं वृत्तिकारं विंशतिलक्षणीवृत्तिकारमभिप्रैति।

## (५४) प्रतिवादिभयङ्करानन्ताचार्यस्य उपवर्ष एव विंशतिलक्षणीवृत्तिकृत् न बोधायन इति मतम्।

प्रतिवादिभयङ्करबिरुदान्वितानन्ताचार्यकृतायामैकशास्त्र्यमीमांसायामपि—'स भगवान् महर्षिः बोधायनो ब्रह्ममीमांसाशास्त्रस्य सुविस्तृतां वृत्तिं कुर्वन्' इत्येवोक्तम्, 'विंशतिलक्षणीवृत्तिकारो भगवानुपवर्षोऽपि' इत्यादिना उपवर्ष एव बोधायनादन्यः विंशतिलक्षणीवृत्तिकार उक्तः, नतु बोधायनः। एतेन उपवर्ष एव बोधायन इति केषाञ्चिद्वादोऽपि परास्तः।

## (५५) स्वीयकल्पितबोधायनवृत्तिसत्यत्वसंरक्षणाय उपवर्ष एव बोधायन इति केनचित् तत्वटीकायां टिप्पणीकरणं पश्चादन्येन तस्याः ग्रन्थमध्य एव योजनकरणम् ।

तत्वटीकायां स्फोटवादे इत्थं वाक्यानि दृश्यन्ते—'वृत्तिकारोपज्ञं स्वमतमाह—'शब्दस्य एकरूपत्वमपि न साधीय' इति । अपिर्दूषणसमुच्चयार्थः । अत्र शाबरम्—'गौरित्यत्र कश्शब्दः ? गकारौकारविसर्जनीया इति भगवानुपवर्षः' इति । वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम । तदिह पातञ्जलादिप्रोक्तं प्रामाणिकमिति न भ्रमितव्यम् । तेषां बाह्यप्रतिक्षेपार्थं वैभवोक्तिरपि स्यात् ।' इति । अत्रैव प्रकरणे श्रुतप्रकाशिकायामित्थं दृश्यते—'एवं शब्दस्यैकरूपत्वमभ्युपगम्य परिहृतम् । अथ तदनभ्युपगमेन परिहरति—शब्दस्यैकरूपत्वमिति । कुत इत्यत्राह—गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वादिति । एवकारेण एकरूपश्शब्दो व्यावर्त्यते । अथ गौरित्यत्र कश्शब्दः ? गकारौकारविसर्जनीया इति हि भगवानुपवर्ष इति गकारादेरेव बोधकत्वं व्याचख्युः' इति ।

अत्र तत्वटीकायां 'वृत्तिकारोपज्ञं स्वमतमाह' इति वाक्येन स्वपदबोध्यरामानुजभाष्यकारमतस्य वर्णात्मकशब्दवादस्य वृत्तिकारोपज्ञत्वकीर्तनात्, रामानुजभाष्यकारमतस्य बोधायननामकवृत्तिकारोपज्ञत्वाघोषणश्रवणवासनावासितान्तःकरणेन केनचित् तत्वटीकाग्रन्थपाठकेन 'भगवानुपवर्षः इति' इति तत्वटीकावाक्योपरि काचन टिप्पणी लिखिता—'वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम' इति । नेदं मूलकर्तुर्वाक्यम् । किमर्थमेवं टिप्पणीं कृतवानिति चेत्, उच्यते—तत्वटीकाग्रन्थं पठितवतः टिप्पणीकृतः एवमाशङ्का जाता—तत्वटीकायां पूर्वं वृत्तिकारोपज्ञं स्वमतमाह इत्युक्तम्, स्वपदाभिलप्यस्य रामानुजभाष्यकारस्य च मतं बोधायननामकवृत्तिकारोपज्ञं प्रसिद्धम्, तथाच उपरि तत्वटीकायां बोधायनस्य वृत्तिकारस्य वचनं प्रमाणतया प्रदर्शनीयम्, न च तत्

प्रदर्श्यते, किन्तु उपवर्षस्य वचनं शाबरोल्लिखितं प्रदर्श्यते, तदिदं न सङ्गतं भवतीति ।

एवं आशङ्कमानः टिप्पणीकारः वृत्तिकारस्य बोधायनस्यैव उपवर्ष इति नाम स्यात् । उपवर्षः विंशतिलक्षणीवृत्तिकृदिति प्रसिद्धम् । 'बोधायनोऽपि हि विंशतिलक्षणीं मीमांसां विस्तरेण व्याख्यदिति वृद्धा विदामासुः' इति सेश्वरमीमांसायां तत्वटीकाकृता वेङ्कटनाथेनैव उक्तम्, एवं च उपवर्षः बोधायनश्चैक एव, तथाच उपवर्षवचनमेव शाबरप्रदर्शितं बोधायनवचनं भवतीति तत्वटीकाकारस्याशयः भवितुमर्हतीति, पूर्वोक्ताशङ्कासमाधानमभिप्रेत्य तद्बोधिकां पूर्वोक्तां टिप्पणीं लिलेख । कालान्तरे स टिप्पणीग्रन्थः ग्रन्थमध्य एव योजितः अपरैः लेखकैः । तद्वाक्यं तत्वटीकाकारवाक्यमेवेति भ्रमः सञ्जातः पश्चात् ग्रन्थमध्ययोजितटिप्पणीकतत्वटीकाग्रन्थदर्शिनाम् । तथैव मुद्रापितः परैः । मुद्रिततद्ग्रन्थदर्शिना महामहोपाध्यायेन पण्डितरत्नबिरुदेन लक्ष्मीपुराभिजनेन श्रीनिवासाचार्येणापि मैसूर्महाराजसंस्कृतमहापाठशालापत्रिकायां उपवर्ष एव बोधायन इत्यत्र प्रमाणत्वेन मध्ययोजितटिप्पणीकतत्वटीकावचनमेव प्रदर्शितम् । अत्याश्चर्योऽयं महिमा टिप्पणीकारस्य, तत्कोशलेखकस्य, तद्ग्रन्थमुद्रापकस्य च । येन अविच्छिन्नतया पश्चात्तनपुरुषाणां भ्रमपरम्परा समजनि, जनिष्यते च ।

### (५६) वृत्तिकारस्य बोधायनस्यैव हि उपवर्ष इति स्यान्नामेति वाक्यस्य तत्वटीकामूलानन्वयात् टिप्पणीत्वनिष्कर्षः ।

तत्वटीकाग्रन्थं पूर्वापरवाक्यान्वयालोचनपूर्वकमर्थानुसन्धानेन परिशीलयतां विदुषां अयं टिप्पणीग्रन्थः प्रमादात् मध्ये पतितः पातितो वा केनापि धृष्टेन इति न न प्रतीयात् । तत्वटीकायां हि पूर्वमुक्तं—रामानुजभाष्यकारस्य वर्णा एव शब्दः, न स्फोटः इति स्वमतं, तच्च वृत्तिकारोपज्ञं, मीमांसावृत्तिकारेण इदंप्रथमतया पूर्वमेवोक्तं, तदेव रामानुजभाष्यकारेणापि उच्यते । न नूतनतया

उच्यते । इति । तत्वटीकागतं वृत्तिकारपदं मीमांसावृत्तिकारपरं, न ब्रह्मसूत्रवृत्तिकारपरम् । तर्हि मीमांसावृत्तिकारः कः ? किं तेनोक्तमिति प्रश्ने 'अत्र शाबरम्' इत्यादिः 'उपवर्ष इती'त्यन्तः तत्वटीकाग्रन्थः । उपवर्षग्रन्थस्य साक्षादनुपलम्भात् उपवर्षोक्तत्वेन कीर्तयत् शाबरं वाक्यं तत्वटीकायां प्रदर्शितम् । तर्हि स्फोटस्यानङ्गीकारे पातञ्जलादिग्रन्थविरोध इत्याशङ्क्य तद्ग्रन्थस्य वैभवोक्तिरूपतया समाहितं उत्तरग्रन्थे तत्वटीकायाम् । मध्ये 'वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम' इति अप्रसक्तं वचनम् । तस्मादनन्वितमिदं वाक्यं न तत्वटीकान्तर्गतम्, अपितु टिप्पणीकारस्येति पूर्वमुक्तमस्माभिः, टिप्पणीकारेण किमर्थमुक्तमिति तु पूर्वमेव विशदीकृतम् । श्रुतप्रकाशिकायामपि एवमेव उक्तम्, बोधायन एव उपवर्ष इत्यादि तु नोक्तम् । श्रुतप्रकाशिकामेवानुसरता तत्वटीकाकृतापि तावदेव वक्तव्यं, अप्रसक्तं 'बोधायन एव उपवर्ष' इत्यादि न वक्तव्यम् ।

### (५७) बोधायन एव उपवर्ष इति वेङ्कटनाथस्याप्यनभिमतम् ।

बोधायन एव उपवर्ष इति तु तत्वटीकाकृतोऽप्यसम्मतम् । सम्मतत्वे सेश्वरमीमांसायां उपवर्षवृत्तिखण्डनं न कुर्याद्वेङ्कटनाथः । तत्खण्डनञ्च पश्चात्प्रदर्शयिष्यामः । उपवर्षस्यैव बोधायनत्वमिति स्वाभिमतं चेत् स्वीयविशिष्टाद्वैतसिद्धान्तमूलाचार्याभिमतस्य भगवतो बोधायनस्य रामानुजभाष्यकारादिभिरत्यन्तपुरस्कृतस्य कथं खण्डनं कुर्यात् धैर्येण वेङ्कटनाथः । किञ्च उपवर्षः विंशतिलक्षणीवृत्तिकार इति सुप्रसिद्धम् । 'शारीरके वक्ष्याम इत्युद्धारः कृतः' इत्यादिभगवत्पादोक्त्या च स्फुटमिदम् । एवं स्थिते 'बोधायनः विंशतिलक्षणीं मीमांसां व्याख्यदिति वृद्धा विदामासुः' इति सेश्वरमीमांसायां बोधायनस्य विंशतिलक्षणीव्याख्यातृत्वं वृद्धोक्तया ज्ञायत इति किमर्थं साधयति वेङ्कटनाथः । 'शारीरके वक्ष्याम' इत्याद्युपवर्षवाक्येनैव उपवर्षाभिन्नतयाभिमतबोधायनस्य तत् ज्ञायेत खलु ।

तस्मात् वेङ्कटनाथस्य तत्वटीकाकारस्यानभिमतमेव विषयं तच्छिरसि आरोपितवान् टिप्पणीकारः। टिप्पणीकारस्य एवमभिमतं स्यादिति तर्क्यते— बोधायनो नाम कश्चित् वृत्तिकारः नासीदिति खलु प्रतिवादिनो वदन्ति, उपवर्ष एव बोधायन इत्युक्ते किं कुर्युस्ते? इति स्वयमभ्यूह्य आदितः टिप्पणीत्वेन लिलेख। तदनुसारी अन्यः पश्चात् ग्रन्थान्तर्गतत्वेन च कल्पयामास कौशलेन। तच्च कौशलं मिथ्याकौशलमित्याविष्कृतमस्माभिः। इतः परं किं कुर्यात् सः, मिथ्याभाषणं कियत्कालपर्यन्तं गूढं स्थिरं भवेत्। केनचित् कालान्तरे उद्भिन्नं भवेत्खलु। किं कुर्मः। तदास्ताम्। पाराशर्यविजयेऽपि महाचार्येण वेङ्कटनाथ-भक्तेन उपवर्षबोधायनयोर्भेद एवाभिप्रेतः। तत् तद्ग्रन्थदर्शिनां स्फुटम्।

## (५८) बोधायनः इति पदघटितानां दण्डिप्रोक्तावन्तिसुन्दरी-ग्रन्थवाक्यानां निर्देशः तदीयपाठशोधनश्च।

दण्डिविरचिते अवन्तिसुन्दरीनामके कथाप्रबन्धे प्रसङ्गात् व्याडीन्द्रदत्त-वररुचिवर्षोपवर्षचरितं प्रस्तुतम्। तत्र व्याडीन्द्रदत्तवररुचयः शिष्याः। वर्षा-नुजः उपवर्षः गुरुः। वररुचेः कात्यायन इति (सकृत्) श्रुतधर इति च नामान्तरे। सर्वेऽपि ते शिष्याः गुरुश्च सुब्रह्मण्यभक्ताः। तत्र वररुचिज-नन्याः निकटे व्याडिप्रोक्तं वाक्यमित्थं श्रूयते—'स्वामिगृहमुद्रेगादुपेत्य धारामधारयम्। आदिष्टश्च स्वामिना श्रुतधरमादाय उपवर्षं भजस्वेति' इति। वररुचिजननीं प्रति इन्द्रदत्तप्रोक्तं वाक्यं पश्चादित्थं श्रूयते—'स्वामिगृहे सुब्रह्मण्यं ब्रह्मविद्याहेतोः अभ्यधारयम्। आज्ञप्तश्च देवेन—एनं (श्रुतधरम्) एतत्सखं (व्याडिसखं) पुरस्कृत्य बोधायनपार्श्वमगमत्। अनंभावी चायमर्थः। भाजनंच दिव्याध्ययनस्यैष दीर्घायुः' इति। अत्र वाक्ये अशुद्धिर्दृश्यते। पश्चात् शोधयिष्यामः। ततः परं शिष्यत्रयस्यापि उपवर्षनिकटे विद्याग्रहणे संवृत्ते दृश्यमानानि वाक्यानि इमानि—'स तैस्समाज्ञापितो गुरुदक्षिणार्थं विज्ञापितः दुहितृदानहेतोः अणीयसीं सुवर्णमात्रामाहृतामियेष' इति, 'इन्द्रदत्तः

(मृतराजशरीरप्रविष्टः) गुर्वर्थं सुवर्णकोटिं कात्यायनं प्रत्यग्राहयत्' इति, 'तां तु सुवर्णकोटिं (कात्यायनप्रदत्तां) न प्रयोजनं (कृतं) कोट्येति प्रत्याख्याय कृतकोटिशब्दमलभतोपवर्षः' इति च।

अस्मिंश्च अनन्तशयननगरमुद्रिते अवन्तिसुन्दरीपुस्तके मङ्गलश्लोकमारभ्य ग्रन्थसमाप्तिपर्यन्तं अशुद्धयः मध्ये मध्ये ग्रन्थपाताश्च परश्शतं गणनामतिवर्तन्ते इत्येतत् ग्रन्थदर्शिनां स्फुटं न वक्तव्यम्। लेखकप्रमादात् कीटवेधात् वम्रि-दंशात् तालपत्रकोशमध्यभागजीर्णत्वात् अन्यस्माच्च सम्भावितात् कारणात् पुस्तकस्य ईदृशी दुरवस्था सञ्जाता। एवं स्थिते 'आदिष्टश्च स्वामिना श्रुतधर-मादाय उपवर्षं भजस्वेति' इति व्याडिवाक्यच्छायामनुसृत्य 'आज्ञप्तश्च देवेन—एनमेतत्सखं पुरस्कृत्य बोधाय नः उपवर्षभजनम्, भावी चायमर्थः' इति इन्द्र-दत्तवाक्यस्य शोधनं कर्तव्यम्। नः—व्याडीन्द्रदत्तवररुचीनां, बोधाय—साङ्गवेद-ग्रहणाय, उपवर्षभजनं देवेन आज्ञप्तमित्यर्थः।

**(५९) केषांचित् अवन्तिसुन्दरीग्रन्थमुखेन बोधायन एव उपवर्ष इति स एव च कृतकोटिरिति स्थापनाय प्रयत्नः तन्निरासश्च।**

अत्र केचित् नवीनाः विशिष्टाद्वैतमतस्यातिप्राचीनत्वव्यवस्थापनं कथं कार्यमित्येवमभिनिवेशेन पुस्तकानि अन्वेषयन्तः, ग्रन्थविपर्यासं वा शोधनं वा मध्ये प्रक्षेपं वा निष्कासनं वा सर्वं धाष्ट्र्येन कर्तुं कुशलाः, अत्र अवन्तिसुन्दरी-पुस्तके 'बोधायनपार्श्वमगमत्' इति वर्तते, उपरि उपवर्षपार्श्वगमनमेव उच्यते, तथा च उपवर्ष एव बोधायनः, 'सुब्रह्मण्यं ब्रह्मविद्याहेतोरभ्यधारयम्' इति, 'तदाज्ञया च बोधायनपार्श्वमगमत्' इति च वर्तते। अतः बादरायणीय-ब्रह्मसूत्रात्मकब्रह्मविद्याव्याख्याता बोधायनः स्मर्यते, स एव उपवर्षः स च कृत-कोटिसंज्ञः, एवञ्च उपवर्षकृतकोट्यपराभिधबोधायनः ब्रह्मसूत्रवृत्तिकारः दण्डिना उल्लिखितः ग्रन्थे। अतः अस्माकं विजयस्संवृत्त इति मनोराज्यं कल्पयन्ति। तेषामवकाशो नास्तीत्युच्यते—

अस्मिन् ग्रन्थे ब्रह्मविद्यापदेन न ब्रह्मसूत्रात्मकपरमात्मविद्या उच्यते, किन्तु साङ्गवेदविद्या। तत्रैव ग्रन्थे 'तां च कन्यां गुरुः चतुर्भिः वेदैः अङ्गैश्च षड्भिर्विना अनुपलभ्यामकल्पयत्।' साङ्गवेदाध्यायिने एव कन्याप्रदानं प्रतिजज्ञे इत्यर्थः। इति पूर्वं साङ्गवेदविद्यैव प्रस्तुता। किञ्च व्याडीन्द्रदत्तवररुचि-प्रभृतयः महावैयाकरणा इत्येव प्रसिद्धम्, नात्र वेदान्तविद्याप्रसक्तिः। पूर्वं व्याडिवाक्ये उपवर्ष इत्येवोक्तम्, उपरि च उपवर्ष इत्येव प्रोच्यते, मध्ये परं बोधायन इति विलक्षणनामकरणस्य श्रोतुः पूर्वापरानुसन्धानवतः कोऽयमिति संशयावहस्य प्रसक्तिर्नास्ति। बोधाय, नः, इति पदद्वये एकपदत्वभ्रान्तिः परेषाम्। 'बोधायनपार्श्वमगमत्' इति चानन्वितं वाक्यम्। बोधाय नः उपवर्षभजनं इत्येव शुद्धः पाठः। एवञ्च दण्डिग्रन्थे वृत्तिकारबोधायनग्रहणस्य प्रसक्तिरेव नास्तीति सहृदयाः पर्यालोचयन्तु।

(६०) अशुद्धदण्डिग्रन्थस्य कथासरित्सागरादिशुद्धग्रन्थानुरोधेन शोधने उपवर्षस्थाने वर्षस्यैव निर्देशापत्तेः उपवर्षप्रसक्तिर्नास्तीति कथनम्।

अपरञ्चेदमाश्चर्यं--वर्षोपवर्षचरितं दण्डिप्रोक्तं बृहत्कथामूलकम्। बृहत्कथा च स्मर्यते दण्डिना ग्रन्थारम्भ एव। गुणाढ्यकृतबृहत्कथासारसङ्ग्रह एव कथासरित्सागरनामा ग्रन्थः महाकविश्रीसोमदेवभट्टविरचितः। तत्र च द्वितीय-तरङ्गे वर्षोपवर्षव्याडीन्द्रदत्तवररुचिचरितं प्रस्तूयते। तत्र च उपवर्षज्येष्ठस्य वर्षस्यैव व्याडिप्रभृतीन् प्रति गुरुत्वं स्मर्यते--'तत्रास्ति चैको वर्षाख्यो विप्रस्तस्मादवाप्स्यथः। कृत्स्नां विद्यामतस्तत्र युवाभ्यां गम्यतामिति॥' 'एष श्रुतधरो जातो विद्यां वर्षादवाप्स्यति। किञ्च व्याकरणं लोके प्रतिष्ठां प्रापयिष्यति॥' 'क्व स वर्ष उपाध्यायः' 'अथ क्रमेण वर्षस्य वयं प्राप्ता गृहं गुरोः' 'वर्षोपाध्याय ओङ्कारमकारोद्दिव्यया गिरा।' 'तदनन्तरमेवास्य वेदास्साङ्गा उपस्थिताः। अध्यापयितुमस्मांश्च प्रवृत्तोऽभूदसौ ततः॥' इत्यादिना। पूर्वं मूर्खस्य सतः पश्चात् स्कन्दप्रसादात् ज्ञानातिशयं प्राप्तस्य ज्येष्ठस्य वर्षस्य साङ्गवेदपाठनमवलोक्य

पूर्वमेव बुद्धिमतः अनुजस्य उपवर्षस्य कौतुकमपि तत्र वर्णितम्—'किमपि तदवलोक्य तत्र चित्रं प्रमदवशान्न परं तदोपवर्षः। अपि विततमहोत्सवस्समग्रः समजनि पाटलिपुत्रपौरलोकः ॥' इति। महाकविक्षेमेन्द्रविरचितायां बृहत्कथा-सङ्ग्रहरूपायां बृहत्कथामञ्जर्यामपि—'आवां वररुचिश्चायं त्वद्दत्तो वर्षमन्दिरम्। विद्यार्थिनस्स्वस्तिमन्तो गच्छामश्शाधि नश्शिवम् ॥' 'हृष्टस्तदनुगः प्राप्य वर्षवेश्म शनैरहम्। तस्मात् प्राप्याखिलान् वेदान् विद्यानामाश्रयोऽभवम् ॥' इत्यादिना वर्षोपवर्षचरितं एवमेवोक्तम्।

एवं वर्षोपवर्षविषये कथाव्यत्यासे अशुद्धिबहुलः मुद्रितदण्डिग्रन्थ एव कथासरित्सागरबृहत्कथामञ्जरीग्रन्थद्वयानुसारेण शोधनीयः संवृत्तः। उपवर्षस्य यत् गुरुत्वं कृतकोटिनामकत्वञ्च तत्सर्वं ज्येष्ठे वर्षे समापतितम्। एवञ्च उपवर्ष एव कृतकोटिनामधेयः बोधायन इति परप्रत्याशा बहुदूरं पलायिता। हरचरित-चिन्तामणिनामके ग्रन्थे महामाहेश्वरजयद्रथविरचिते शब्दशास्त्रावताराख्य-सप्तविंशप्रकाशे कथासरित्सागराद्यनुसारिण्येव वर्षोपवर्षादीनां कथा।

## (६१) दण्डिग्रन्थादवगतबोधायनाभिमतोपवर्षस्य सुब्रह्मण्यभक्तत्वेन पराशाभङ्गः।

किञ्च अशुद्धमुद्रितदण्डिकृतावन्तिसुन्दरीग्रन्थानुसारेण बोधायन एव उपवर्ष इति कथञ्चिदवगतावपि, भक्षितेऽपि लशुने न शान्तो व्याधिरिति आभाण-करीत्या न परेष्टसिद्धिः। यतः तत्र दण्डिग्रन्थे बोधायनाभिमतस्य उपवर्षस्य शिवकुमारसुब्रह्मण्यभक्तत्वमवगतम्। वर्षोपवर्षचरितबोधकेषु कथासरित्सागरादिषु सर्वेष्वपि प्रबन्धेषु सुब्रह्मण्यभक्तत्वमेव उपवर्षादीनामवगतम्। पराभिमतश्च बोधायनः परकीयविशिष्टाद्वैतसिद्धान्तप्रवर्तकाचार्यः परमैकान्ती देवतान्तर-स्मरणमात्रमप्यसहमानः शिवविद्वेषी कथं शिवकुमारसुब्रह्मण्यभक्तो भवितुमर्हति? पर एव पर्यालोचयतु। यदि बोधायनस्य पराभिमतस्य शिवकुमारभक्तत्वं, कथं

तदीयाः परे देवतान्तरं प्रद्विषन्ति । तस्मात् दण्डिग्रन्थावलंबेन पराशापूरण-मनोरथः निष्फल एवेति सुधियो विवेचयन्तु ।

(६२) मणिमेखलाग्रन्थादवगतः कृतकोटिः उपवर्षभिन्नः ।

द्रविडभाषागाथामये त्रिंशद्गाथोपेते वौद्धमतानुसारिणि मणिमेखलाख्य-ग्रन्थे सप्तविंशगाथायाम्—

நவையறு நன்பொருளுரைமினேவெனச்
சமயக்கணக்கர் தந்திறஞ்சார்ந்து
வைதிகமார்கத்தளவை வாதியை
யெய்தினளெய்திமின் கடைப்பிடியியம்பென.

வேதவியாதனுங் கிருதகோடியு
மேதமில் சைமினி யெனுமிவ் வாசிரியர்
பத்துமெட்டுமாறும் பண்புறத்
தத்தம் வகையாற்றும் பகர்ந்திட்டனர்.

इत्यत्र बुद्धमतावलम्बिनी मणिमेखलानाम्नी देवी प्रथमतो वैदिकसमयशास्त्र-विन्निकटमेत्य भवत्सिद्धान्ततत्वं प्रमाणेयत्ताञ्च ब्रूत इति प्रश्नं कृतवती, तदा वेदव्यासः प्रमाणदशकमाह, कृतकोटिः प्रमाणाष्टकमाह, जैमिनिः प्रमाणषट्कमाह, इत्युक्तम्। अत्र ग्रन्थे पश्चात् शैवहैरण्यगर्भवैष्णवानां षडङ्गयुक्तवेदविदां क्षपणकानां साङ्ख्यानां वैशेषिकाणां चार्वाकाणाञ्चाभिमतानि तत्वानि तत्त-न्मततत्वविदाचार्यमुखेन श्रुत्वा निर्धारितवती मणिमेखला इत्यप्युक्तम् ।

अत्र कश्चित् कृतकोटिनामा वेदव्यासजैमिनिसमकक्ष्यः आचार्यः निर्दिष्टः। नायं वेदव्यासजैमिनिसूत्रवृत्तिकर्ता उपवर्षो भवितुमर्हति । जैमिनि-वेदव्यासयोः सूत्रकृत्त्वेन, उपवर्षस्य च तदुभयप्रणीतसूत्रवृत्तिकृत्त्वेन तत्समकक्ष्यत्वा-भावात् । वेदव्यासजैमिनिसूत्रवृत्तिकृत उपवर्षस्य तदुभयविरोधेन प्रमाणसंख्या-वक्तृत्वासंभवाच्च । नापि पराभिमतवोधायननामकवृत्तिकारो भवितुमर्हति। तस्यापि वेदव्यासमूत्रमात्रस्य वा, यद्वा परेषामेवाभिमतपक्षान्तरे वेदव्यासजैमिनिसूत्राणां

वा, तत्रापि पक्षान्तरे काशकृत्स्नप्रणीतदेवताकाण्डसूत्राणामपि वा, वृत्तिकारत्वेन पराभिमतस्य सूत्रकारवेदव्यासजैमिनिसमकक्ष्यत्वाभावादेव। अतः कृतकोटिरिति कश्चनाचार्यः बादरायणजैमिनिवदेव कस्यचित् सूत्रग्रन्थस्य कर्ता प्रमाणसंख्याविषये तदुभयविरुद्धवादी भवितुमर्हतीति प्रतीयते। तादृशकृतकोटिना समाश्रितेन परेषां न किमपि स्वमतव्यवस्थापनं कृतं भवेदिति प्रामाणिका जानीयुः।

## (६३) मणिमेखलागतकृतकोटिपदव्याख्यानच्छिद्रेण परेषां स्वमतप्रचारणम्।

अत्र सटिप्पणमणिमेखलाग्रन्थप्रकाशकेन महामहोपाध्यायेन स्वामिनाथार्येण' मणिमेखलान्तर्गतकृतकोटिपदविवरणप्रवृत्तेन, विशिष्टाद्वैतमतस्यार्षत्वप्रचारणलक्ष्यभाजां परेषां निकटं गत्वा तदीयकृतकोटिविषयकसिद्धान्तं श्रुत्वा तदेव प्रामाणिकमिति च मत्वा द्रविडभाषामयटिप्पण्याम्—'कृतकोटिनामा ग्रन्थः संपूर्णमीमांसाशास्त्रस्य बोधायनेन विरचितप्रथमवृत्तिग्रन्थः, कृतकोटिनामकग्रन्थकरणात् बोधायनस्यापि कृतकोटिरिति नाम, अस्मिन् वृत्तिग्रन्थे प्रत्यक्षादिप्रमाणदशके प्रमाणाष्टकमेव निरूप्यते, एतद्विषयको वृत्तान्तः प्रपञ्चहृदयनामके संस्कृतग्रन्थे दृश्यते' इति लिखितं मुद्रितञ्च। अहो परेषां सामर्थ्यं, यत् प्राप्तकालं यया कयापि विधया स्वमतप्रचारणं कर्तव्यमित्यत्र तेषां दृढोऽभिनिवेशः।

## (६४) सुचरितमिश्रकाशिकाग्रन्थावगतः कृतकोटिरपि उपवर्षभिन्न एव।

एवमेव मणिमेखलाविमर्शकैः डाक्टर् कृष्णस्वाम्य्य्यङ्गार् महाशयैरपि स्वीये (1927—4-) सर्वकलाशालाप्रसङ्गे पुस्तकरूपे कृतकोटिपदं गृहीत्वा स्वीयविशिष्टाद्वैतमतार्षत्वव्यवस्थापनं कृतं, तदपि पूर्वोक्तरीत्या दत्तोत्तरम्। यत्तु तैः तत्रैव प्रसङ्गे सुचरितमिश्रप्रणीतमीमांसाश्लोकवार्तिकटीकायां काशिकाख्यायां विद्यमानः कृतकोटिनिर्देशः प्रमाणीकृतः स्वीयमतस्थापनाय, तत्रोच्यते—

सुचरितमिश्रप्रणीतायां काशिकायां शब्दपरिच्छेदे इत्थं वर्तते— 'अत्र प्रत्यक्षानुमानयोरपरीक्ष्यत्वे उक्ते शास्त्रस्याप्यपरीक्ष्यताप्रतिपादनार्थं भाष्यम्— 'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्' इति। ननु वृत्तिकारमते 'न परीक्षितव्यं निमित्त'मित्ति प्रतिज्ञाय, प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि, तदन्तर्गतञ्च शास्त्रं अतस्तदपि न परीक्षितव्यमिति उक्ते, प्रत्यक्षव्यभिचारेण परीक्षामाशङ्क्य तदव्यभिचारे उक्ते, अनन्तरमेव शास्त्रस्यापरीक्षा प्रतिपाद्यत इति युक्तम्, तद्धि प्रकृतं, किमनुमानेन व्यवधीयते? सत्यमेवम्, अयं तु तन्त्रान्तरानुसारेण क्रम आश्रितः। तथाहि—नाप्रत्यक्षं प्रमाणमिति लोकायतिका मन्यन्ते। ते हि वैशेषिकाद्याश्रितप्रत्यक्षानन्तरानुमाने प्रामाण्यप्रतिपादनेन प्रतिबोध्यन्ते। एवं हि वैशेषिकाः पठन्ति—'द्विविधं प्रमाणमालोचिताध्यवसानमनालोचितानुगमनं चे'ति। तथा अन्येपि प्रत्यक्षमनुमानं च द्वे एव प्रमाणे इति। यथाऽक्षपादीयैरपि प्रत्यक्षानन्तरमनुमानं लक्षितम्—तत्पूर्वकं त्रिविधमनुमानमिति। तेनेहापि तावत् प्रत्यक्षानन्तरमनुमानं वर्णितम्। ततो महाविषयतया प्रकृतत्वेन पुरुषार्थौपयिकत्वेन च शास्त्रम्। तदनन्तरञ्च यत्र क्वचन वाच्ये बहूनां प्रसिद्धमित्युपमानमुक्तम्। न्यायविस्तरे हि प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमित्युक्तम्। ततः पाराशर्यमतेनार्थापत्तिरुक्ता, तदुत्तरकालमेव तन्मतानुसारिणा कृतकोटिनोक्तत्वात्। अभावप्रमाणस्य तु भावप्रमाणाभाव एवात्मेति तदुत्तरः प्रस्तावः। किं पुनस्तन्त्रान्तरानुसारस्य प्रयोजनम्? उच्यते—प्रसिद्धत्वेन ह्यपरीक्षा प्रतिपाद्यते, तन्त्रान्तरेष्वेवमिमानि प्रमाणानि प्रसिद्धानीति प्रसिद्धिप्राबल्यं कथितं भवति, व्युत्थिताश्च तेन तेन साक्षिणा प्रतिपादिता भवन्ति' इति।

अत्र काशिकायां 'वृत्तिकारमते' इत्यत्र निर्दिष्टः उपवर्ष इत्यत्र कस्यापि संशयलेशोऽपि नास्ति। शाबरभाष्ये पूर्वं 'वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयाञ्चकार तस्य निमित्तपरीष्टिरित्येवमादिम्' इति तस्यैव निर्देशात्। 'अयन्तु तन्त्रा-

न्तरानुसारेण क्रम आश्रितः' इत्यत्र तन्त्रान्तरं मीमांसातन्त्रात् भिन्नं तन्त्रमित्यर्थः इत्यत्रापि कस्यापि न संशयलेशोऽपि भवितुमर्हति। तन्त्रान्तरकथित-क्रमनिरूपणप्रक्रमे काशिकायामुक्तम्—'उपमानप्रमाणकथनोत्तरकालं अर्थापत्तिप्रमाणं पाराशर्यमतानुसारिणा कृतकोटिना कथितम्, अतः पाराशर्यमतेनार्थापत्तिः उपमानप्रमाणानन्तरं शाबरभाष्ये उक्ता' इति। अत्र कोऽसौ पाराशर्यः? तन्मतञ्च किं? कुत्र ग्रन्थे तन्मतमुक्तं? तन्मतानुसारी कृतकोटिः कः? इति स्पष्टं न ज्ञायते। पाराशर्यमतानुसारी कृतकोटिः अर्थापत्तिप्रमाणं अङ्गीकरोति, तच्च प्रमाणं उपमानप्रमाणानन्तरं कथयति इत्येतावदेव ज्ञायते। पाराशर्यो वा कृतकोटिर्वा तन्त्रान्तरप्रवर्तकः इत्येतत्तु एतत्काशिकाग्रन्थं परिशीलयतां स्पष्टमेव प्रतीयते। पूर्वनिर्दिष्टः वृत्तिकारः उपवर्षः मीमांसातन्त्रसम्बन्धी, कृतकोटिश्च तन्त्रान्तरसम्बन्धी इति काशिकाग्रन्थनिरीक्षणेन स्फुटं प्रतीयमाने कोऽयमाग्रहः उपवर्ष एव कृतकोटिरिति व्यवस्थापने, तस्य च स्थापनस्य स्वविरुद्धकाशिकाग्रन्थ एव प्रमाणं इति प्रदर्शने च, बोधायननाम्नः काशिकादिषु कुत्राप्यदर्शने सति कृतकोटिरेव बोधायनः स एव च उपवर्ष इति च कोऽयमस्थाने कोलाहलः इति सुधियो विदांकुर्वन्तु।

## (६५) नव्यानां परेषां प्रपञ्चहृदयग्रन्थावलंबेन बोधायन-वृत्तिस्थापनप्रयासनिरासः।

प्रपञ्चहृदयाभिधे ग्रन्थे अज्ञातनामधेयकर्तृके अनन्तशयननगरमुद्रिते उपाङ्गप्रकरणे कृतकोटिबोधायनोपवर्षनामत्रयनिर्देशः यद्यप्यस्ति। तथापि स ग्रन्थः नातीव प्रामाणिकः। तत्रैव च ग्रन्थे बहवः मिथो विरुद्धाः पाठभेदास्सन्ति। अतः तद्ग्रन्थमुखेन न कस्यचिदर्थस्य विशिष्य निर्णयो भवितुमर्हति। सच ग्रन्थः एवम्—"तदिदं मीमांसाशास्त्रं विंशत्यध्यायनिबद्धम्। तत्र षोडशाध्यायनिबद्धं पूर्वमीमांसाशास्त्रं पूर्वकाण्डस्थधर्मविचारपरायणं जैमिनिना कृतम्। तदन्यदध्यायचतुष्कं उत्तरमीमांसाशास्त्रं उत्तरकाण्डस्थब्रह्मविचारपरायणं व्यास-

कृतम् । तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिनामधेयं भाष्यं बोधायनेन कृतम् । तद्ग्रन्थबाहुल्यभयात् उपेक्ष्य किञ्चित् संक्षिप्तं उपवर्षेण कृतम् । तदपि मन्दमतीन् प्रति दुष्प्रतिपादं विस्तीर्णत्वादित्युपेक्ष्य षोडशलक्षणपूर्वमीमांसाशास्त्रमात्रस्य देवस्वामिना अतिसंक्षिप्तं कृतम् । भवदासेनापि कृतं जैमिनीयभाष्यम् । पुनर्द्विकाण्डे धर्ममीमांसाशास्त्रे पूर्वस्य तन्त्रकाण्डस्य आचार्यशबरस्वामिना अतिसंक्षेपेण सङ्कर्षकाण्डं द्वितीयमुपेक्ष्य कृतं भाष्यम् । तथा देवताकाण्डस्य सङ्कर्षेण ब्रह्मकाण्डस्य भगवत्पादब्रह्मदत्तभास्करादिभिः मतभेदेनापि कृतम् । तथा शाबरभाष्यं वाक्यार्थभेदमभ्युपगम्य भट्टप्रभाकराभ्यां द्विधा व्याख्यातम् । तत्र भावनापरत्वेन भट्टकुमारेण, नियोगपरतया प्रभाकरेण । तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य प्रत्यध्यायमर्थविशेषः प्रदर्श्यते" । इति ।

अत्र 'कृतकोटिनामधेयं भाष्यं बोधायनेन कृतम्' इत्येकः पाठः । 'कृतकोटिना भाष्यं बोधायनेन कृतम्' इत्यधोमुद्रितः अपरः पाठः । भाष्यस्यैव कृतकोटिनामधेयत्वबोधकः पूर्वतनः पाठः ग्रन्थान्तरेषु ग्रन्थकर्तुः कृतकोटिनामधेयत्वप्रतिपादनात्, अत्रैव तदनुसारेण पाठान्तरे तथा प्रतिपादनाच्च नातीव समञ्जसः । उपरि च "तद्ग्रन्थबाहुल्यभयात् उपेक्ष्य किञ्चित् संक्षिप्तं उपवर्षेण कृतम् । तदपि मन्दमतीन् प्रति दुष्प्रतिपादं विस्तीर्णत्वादित्युपेक्ष्य षोडशलक्षणपूर्वमीमांसाशास्त्रमात्रस्य देवस्वामिना अतिसंक्षिप्तं कृतम् । भवदासेनापि कृतं जैमिनीयभाष्यम् । पुनर्द्विकाण्डे धर्ममीमांसाशास्त्रे पूर्वस्य तन्त्रकाण्डस्य आचार्यशबरस्वामिना अतिसंक्षेपेण सङ्कर्षकाण्डं द्वितीयमुपेक्ष्य कृतं भाष्यम्" इत्येकः पाठः । अपरः पाठः—'तद्ग्रन्थबाहुल्यभयात् पुनराचार्येण शबरस्वामिना पूर्वमीमांसाशास्त्रस्य चतुर्विंशतिसहस्रैरतिसंक्षेपेण कृतं भाष्यम्' इति ।

अत्र पूर्वपाठरीत्या बोधायनात् कृतकोटिनामधेयात् उपवर्षः भिन्नः । बोधायनः विस्तीर्णग्रन्थकर्ता, उपवर्षः संक्षिप्तग्रन्थकर्ता इति ज्ञायते । उत्तर-

स्मिन्पाठे, उपवर्षः कश्चित् ग्रन्थकर्ता कृतकोटिभिन्नः नासीदिति प्रतीयते। तत्तु परेषामपि अभिमतम्। परे हि उपवर्ष एव कृतकोटिरिति किल अभिप्रयन्ति। उपवर्षस्यैव कृतकोटिरिति नाम इति चावन्तिसुन्दरी-ग्रन्थोऽपि वदति। 'उपवर्षो हलभूतिः कृतकोटिरयाचितः' इति निखण्टुः त्रिकाण्डशेषे केशवनिखण्टौ च दृश्यते इति लक्ष्मीपुरं श्रीनिवासाचार्या वदन्ति मैसूर् महाराजसंस्कृतमहापाठशालापत्रिकायाम्।

उपवर्षवृत्तिरस्तीत्यत्र न कस्याप्याक्षेपः। उपवर्षस्य कृतकोटिरिति नामास्तु मा वा। उपवर्षस्य बोधायन इति नाम्नि विप्रतिपत्तिरस्माकम्। अवन्ति-सुन्दरीग्रन्थे बोधायननाम नास्तीति तद्ग्रन्थशोधनेन पूर्वं प्रदर्शितम्। पाठभेद-बहुलाप्रामाण्यज्ञानास्कन्दितप्रपञ्चहृदयग्रन्थमात्रात् निश्चेतुं न शक्यम्। यतः 'कृतकोटिना भाष्यं बोधायनेन कृतम्' इति स्थाने 'कृतकोटिना भाष्यं कृतम्' इति बोधायनपदं विहाय पाठस्स्यादिति ऊहितुं शक्यते। 'कृतकोटिना भाष्यम्' इति मुद्रितकोशे अधः मुद्रितं पाठान्तरमेव तस्य ज्ञापकम्। बोधाय-नेन इत्यपि पदं यदि स्यात्, 'कृतकोटिना बोधायनेन भाष्यम्' इति किल पाठान्तरं प्रदर्शनीयम्। नतु कृतकोटिना बोधायनेन इति समानाधिकरणपदयोर्मध्ये भाष्यं इति निवेशस्समञ्जसः। तेन ज्ञायते कृतकोटिना भाष्यं कृतमित्येव पाठः, परैः रन्ध्रान्वेषिभिः बोधायनेन इति अस्थाने योजितं पदमिति। परेषु च केचित् बोधायनोपवर्षभेदकल्पकाः, अपरे ऐक्यकल्पकाः। उभयेऽपि क्रमेण पूर्वनिर्दिष्टं उपरि अधश्च मुद्रितं बोधायनोपवर्षभेदगमकं तदगमकञ्च पाठद्वयं कल्पयामासुः इति ऊहस्यावकाशस्सुतरामस्ति।

## (६६) बोधायनोपवर्षकृतकोटिनामत्रयस्य भिन्नभिन्न-वाचकस्य एकत्राचार्ये अनन्वयोपसंहारः।

एतावता निष्पन्नं वस्तुतत्वमिदं—अवन्तिसुन्दरीग्रन्थस्थे उपवर्षचरित-भागे प्रामाण्य एव विप्रतिपत्तिः, पूर्ववर्णितरीत्या कथासरित्सागरादिग्रन्थविरो-

धात् । मणिमेखलाग्रन्थदृष्ट्या सुचरितमिश्रकाशिकादृष्ट्या च कृतकोटिनामधेयस्य पूर्वोक्तप्रकारेण उपवर्षे असङ्गतेश्च । यदि च अवन्तिसुन्दरीग्रन्थप्रामाण्यं, तदापि उपवर्षस्य कृतकोटिरिति नामास्तु, तथापि तस्य बोधायन इति नाम नास्ति, अवन्तिसुन्दरीग्रन्थे प्रपञ्चहृदयग्रन्थे च पूर्वोक्तरीत्या तस्मिन् बोधायननामपदानन्वयात् । एवञ्च सन्दिग्धकृतकोटिनामधेयेन निश्चितबोधायननामाभावेन उपवर्षेण पूर्वोत्तरमीमांसयोः वृत्तिः कृता इत्यत्राविप्रतिपत्तिः । उपवर्षातिरिक्तः बोधायनाख्यः कश्चित्, पूर्वोत्तरमीमांसयोः, उत्तरमीमांसामात्रस्य वा वृत्तिकारः आसीदित्येतत्तु बहुविधपाठभेदयुताज्ञातकर्तृकसन्दिग्धप्रामाण्यप्रपञ्चहृदयबलेन वा, वेङ्कटनाथोक्तवितथैतिह्यावलम्बेन वा, परकीयभाष्यादिप्रदर्शितवाक्यमात्रबलेन वा निश्चेतुं न शक्यते । नास्तीत्येवास्माकं निश्चयः इति सिद्धम् ।

## (६७) परेषां द्रविडभाष्ये अधिकपदप्रक्षेपकरणं यामुनग्रन्थे विद्यमानपदनिष्कासनञ्च ।

श्रीनरसिंहाचार्यैः परिशोधिते मुद्रिते वेदान्तसाराभिधे रामानुजप्रणीते ग्रन्थे अन्तरधिकरणे इमानि वाक्यानि दृश्यन्ते—'तदेतद्वाक्यकारश्चाह—'हिरण्मयः पुरुषो दृश्यत इति प्राज्ञस्सर्वान्तरस्स्यात् लोककामेशोपदेशात् तथोदयात्पाप्मनाम्' इत्युक्त्वा, तद्रूपस्य कार्यत्वं मायामयत्वं वेति विचार्य, 'स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्' इति निरसनीयं मतमुपन्यस्य, 'रूपं वातीन्द्रियं अन्तःकरणप्रत्यक्षनिर्देशात्' इति । व्याख्यातं च द्रमिडाचार्यैः—'नवा मायामात्रं अञ्जसैव विश्वसृजो रूपम्, तत्तु न चक्षुषा ग्राह्यम्, मनसा त्वकलुषेण साधनान्तरवता गृह्यते, 'न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेन' इति श्रुतेः । नह्यरूपाया देवताया रूपमुपदिश्यते, यथाभूतवादि हि शास्त्रम् । यथा 'माहारजनं वासः' 'वेदाहमेतं पुरुषं महान्तम्, आदित्यवर्णम्' इति प्रकरणान्तरनिर्देशात् इति साक्षिणः' इति, 'हिरण्मय इति रूपसामान्याच्चन्द्र-

मुखवत्' इति च वाक्यम्। तच्च व्याख्यातं तैरेव 'न मयडत्र विकारमादाय प्रयुज्यते, अनारभ्यत्वादात्मनः' इत्यादिना' इति।

तिरुपतिदेवस्थानमुद्रणालये मुद्रितस्य वेदार्थसंग्रहस्य उपोद्घाते श्रीसुदर्शनाचार्यप्रणीतेऽपि इत्थमेव वेदान्तसारवाक्यान्यनूदितानि। वेदार्थसंग्रहे च इमानि वाक्यानि विद्यन्ते, तानि चानूद्य अस्माभिः (३४) (३५) अङ्कितविषयनिरूपणप्रकरणे वाक्यकारभाष्यकारवाक्यानां अद्वैतसिद्धान्ताविरोधः उपपादितः। स च तत्रैवावगन्तव्यः।

परंतु द्रमिडाचार्यवाक्यानुवादस्थले 'न वा मायामात्रं अञ्जसैव विश्वसृजो रूपम्' इत्यत्र 'न वा मायामात्रम्' इति अधिकतया प्रक्षिप्तं वेदान्तसारग्रन्थमुद्रापकैः। उपोद्घातकृता च अधिकं तद्वाक्यं वेदार्थसंग्रहपुस्तकोपोद्घाते अनूदितम्। परं तु वेदार्थसंग्रहपुस्तकमध्ये अधिकं न वा मायामात्रमित्येतत् दैवात् न योजितम्। अधिकमिति कुत उच्यते? मुद्रणकाले, न वा मायामात्रमित्येतत् वेदार्थसंग्रहपुस्तके गलितमित्येवास्तु इति चेत्—उच्यते—अन्यत्र मुद्रितेषु वेदार्थसंग्रहपुस्तकेष्वपि न वा मायामात्रमित्येतत् न दृश्यत एव, अतोऽधिकमिति वदामः। तत्रापि गलितमित्येव अभ्युपगम्यतामिति चेत्।

शृणु अवहितेन मनसा। तात्पर्यदीपिकायां सुदर्शनसूरिणा अधिकमिदं पदं नानूद्यते। तत्वटीकायामपि वेङ्कटनाथेन—'द्रमिडभाष्यकारैरप्युक्तम्— 'अञ्जसैव विश्वसृजो रूप' मित्यारभ्य, 'न ह्यरूपाया देवताया रूपमुपदिश्यते यथाभूतवादि हि शास्त्र'मिति' इति ग्रन्थेन, न वा मायामात्रमित्येतद्विनैव 'अञ्जसैव' इत्यारभ्यैव द्रमिडभाष्यवाक्यमनूद्यते। अत एवास्माभिर्धैर्येणोच्यते—न वा मायामात्रमित्येतत् अधिकं प्रक्षिप्तं दुर्विदग्धैः भगवद्रूपस्य मायिकत्वं वर्णयतां अद्वैतिनां द्रविडाचार्यः प्रतिकूल इति प्रकाशनाय कृतप्रयत्नैः कपटनाटकसूत्रधारैरिति।

'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद। सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि ॥' इति भगवतैव स्वीयरूपादेर्मायामात्रत्वमुच्यते। किं कुर्मः।

12

गूढतया परैः कृतः अधिकपदप्रक्षेपः इदं प्रक्षिप्तमिति तदीयग्रन्थमुखेनैव प्रकाशनात् उद्भिन्नः। कियत्कालं छद्म गूढं स्यात्। कदाचित् भगवत्संकल्पेन तस्य प्रकाशो भवेत् खलु, तदद्य छद्म उद्घाटितम्।

वेदान्तसारपुस्तके च 'तद्रूपस्य कार्यत्वं मायामयत्वं वा इति विचार्ये' इति वाक्ये कार्यत्वकोटेः प्रतिकोटितया मायामयत्वकोटिर्निर्दिष्टः। तत्तु न सम्यक्। कोटयोर्विरोधाभावात्। कोटिद्वयमध्य एव सिद्धान्तकोटिः प्रविष्टः उत न? अन्यश्चेत् स कथं न निर्दिष्टः। तस्मात् ग्रन्थाशुद्धिरपि तस्मिन् पुस्तके दृश्यते। शोधनमकृत्वैव मुद्रितं, उपोद्घातकृता अनूदितञ्च। तदास्ताम्।

यामुनप्रणीतात्मसिद्धिग्रन्थे श्रीवत्साङ्कद्वयं निर्दिष्टम्, तत्र एकः परिग्राह्यः, अन्यः परित्याज्यः। तत्र परपरित्याज्यश्रीवत्साङ्कस्थाने श्रीकण्ठः अस्माभिरभ्यूहितः। एतत् (17) अङ्कितविषयनिरूपणप्रकरणादवगन्तव्यम्। तत्र परित्याज्यश्रीवत्साङ्कबोधकपदं यामुनग्रन्थे विद्यमानं यामुनग्रन्थटिप्पणीकारादृतत्वेन (22) अङ्कितविषयनिरूपणप्रकरणे प्रकाशितं निष्कासितं, तिरुपतिदेवस्थानमुद्रणालयमुद्रितवेदार्थसंग्रहोपोद्घातकृता। तस्य पदस्य विद्यमानत्वे किल तत्स्थाने श्रीकण्ठपदं अभ्यूह्येत। तादृशोऽस्यावकाशो निरस्तः उपोद्घातकृता। वस्तुतस्तु श्रीवत्साङ्कपदं तत्रास्त्येव यामुनग्रन्थटिप्पणीकृताप्यनुमोदितम्। तत् निष्कासयितुं न शक्यते इति वेदितव्यम्। एवं परेषां अधिकपदप्रक्षेपविद्यमानपदनिष्कासनविषये बहून्युदाहरणानि वर्तन्ते, ग्रन्थविस्तरभिया न प्रकाश्यन्ते।

## (६८) गौणमिथ्यात्मनोऽसत्त्वे इत्यादिश्लोकत्रयस्य द्रविडाचार्यकृतत्वं सुन्दरपाण्डयकृतत्वं वेति विप्रतिपत्तिः।

भगवत्पादैः समन्वयसूत्रविवरणस्थले अन्ते श्लोकत्रयमुदाहृतम्—'अपि चाहुः—'गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात्। सद्ब्रह्मात्माहमित्येवं बोधि(धे)कार्यं कथं भवेत्॥ अन्वेष्टव्यात्मविज्ञानात् प्राक् प्रमातृत्वमात्मनः।

अन्विष्टस्स्यात् प्रमातैव पाप्मदोषादिवर्जितः ॥ देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥' इति । भामत्यां 'अत्रैव ब्रह्मविदां गाथामुदाहरति—अपि चाहुरिति' इत्युक्तम् । क एते ब्रह्मविद इति न ज्ञायते ।

आशुतोषसंस्कृतग्रन्थमालायां मुद्रिते अभिनवद्रविडाचार्यापरनामक-श्रीबालकृष्णानन्दसरस्वतीप्रणीते पद्यमये शारीरकमीमांसाभाष्यवार्तिके सविवरणे समन्वयसूत्रावसाने—'कथितार्थपरां द्रविडार्यकृतां अपि चेति गुरुर्वदतीह कथाम् । महतामुदिते गदिते विदितं स्थिरनिश्चयवान् जन एष इति ॥' इति पद्येन तु द्रविडाचार्या इति ज्ञायते । तत्रैव 'उक्तेऽर्थे द्रविडाचार्यसंमतिप्रदर्श-नपरं 'अपिचे'त्यादिग्रन्थमवतारयति—कथितेति' इति विवरणे मूलकारै-रेव विवृतं च ।

'पुरैव प्रत्नार्यैर्विशदविवृतं नीतिनिपुणैः श्रुतिं सूत्रं भाष्यं मुहुरपि समालोच्य सकलम् । यतिर्बालो नव्यद्रविडमुनिराम्नायनगराधिभूः कृष्णानन्दः स्वमतिपरिशुद्धिं वितनुते ॥' इति तद्वार्तिकारंभे उक्तम् । वार्तिककाराश्चेमे गौडब्रह्मानन्दशिष्या इत्यपि तत्र स्फुटम् । तेषां वेदपुरीश इति पूर्वाश्रमनाम । ते च द्रविडदेशसंभूता इत्यादि तत एव ज्ञायते । अद्वैतसिद्धान्तावलंबिनामे-तेषां अभिनवद्रविडाचार्या इति नाम्नैव प्राचीना द्रविडाचार्या अपि अद्वैतिन इति निश्चीयते । अन्यथा असंगतेः । न हि अद्वैतिनां अभिनवरामानुजाचार्या इत्यादिबिरुदावहत्वं युज्यते । न वा विशिष्टाद्वैतिनां अभिनवशंकराचार्या इत्यादिबिरुदावहत्वं युज्यते, तद्वत् ।

एवं च भगवत्पादोदाहृतं अद्वैतसिद्धान्तप्रतिपादकश्लोकत्रयमपि द्रविडा-चार्यकृतमित्यवगमेनापि द्रविडाचार्याः अद्वैतसंप्रदायप्रवर्तकपूर्वाचार्या इति विशदमवगम्यते ।

सूतसंहिताव्याख्यायां तात्पर्यदीपिकायां माधवाचार्यविनिर्मितायां मुक्तिखण्डचतुर्थाध्याये सुन्दरपाण्ड्यवार्तिकत्वेन व्यवहृत: 'देहात्मप्रत्यय' इति पूर्वं निर्दिष्टश्लोक:। तत्रत्यमिदं वाक्यम्—'तथा सुन्दरपाण्ड्यवार्तिकमपि—'देहात्मप्रत्यय:........निश्चयात्' इति' इति। तथा च श्लोकत्रयमपि सुन्दरपाण्ड्यकृतमिति अवगम्यते।

सुन्दरपाण्ड्यश्च पूर्वमीमांसासंबन्धिन: 'नि:श्रेण्यारोहणप्राप्यम्' इत्यादीन् श्लोकान् प्रणीतवानिति कल्पतरौ वेधाद्यधिकरणे (3–3–14) 'आह चात्र निदर्शनमाचार्य सुन्दरपाण्ड्य:' इत्युपक्रम्य 'नि:श्रेण्यारोहणप्राप्य'मित्यादिश्लोकत्रयपठनात् ज्ञायते। 'नि:श्रेण्यारोहणप्राप्य'मित्यादिश्लोकाश्च तन्त्रवार्तिके (3–3–7) श्रुतिलिङ्गाधिकरणे कीर्तिता:। तत्र च 'आह च' इत्येव उपक्रम्य इमे श्लोका: पञ्च पठिता:। न्यायसुधायां तन्त्रवार्तिकव्याख्यायां 'वृद्धानां श्लोकपंचकं पठति—आह च' इति' इत्येवोक्तम्। कल्पतरुबलादेव श्लोकप्रणेतॄणां नाम निश्चीयते। एवंच सुन्दरपाण्ड्या इति प्रसिद्धा: प्राचीनाचार्या: उभयमीमांसाचार्या: अद्वैतसंप्रदायस्य प्रवर्तका इति स्फुटमवगम्यते।

द्रविडाचार्याणामेव सुन्दरपाण्ड्या इत्यपि नाम स्यादिति कल्पने, अभिनवद्रविडाचार्यवचनं माधवाचार्यवचनं च अविरुद्धं भवेदिति ज्ञायते। सर्वथा द्रविडाचार्या: अद्वैतसंप्रदायप्रवर्तका इत्यत्र नाक्षेपलेशस्याप्यवकाश इति सुधीरमुद्घोषयाम:। इत्यलम्।

## (६९) वाक्यभाष्यग्रन्थस्थवाक्यपर्यालोचनोपसंहार:।

एतावत्पर्यन्तं अस्मदीयग्रन्थेषु उदाहृतानि वाक्यकारवाक्यानि द्रमिडभाष्यकारवाक्यानि च, परकीयग्रन्थेषु उदहृतानि तानि च पर्यालोचितानि। तान्यद्वैतवादाविरुद्धानि अद्वैतसाधकानि, शरीरशरीरिभावनिबन्धनपरकीयविशिष्टाद्वैतासाधकानि चेति निरूपितम्। 'द्रमिडभाष्यकारादयो हि

परपक्षप्रतिक्षेपाद्यनादरेण अतिसंक्षिप्तान् ग्रन्थानरचयन्' इति वदन् श्रुतप्रकाशिकाकार एव, द्रमिडभाष्यकारः अद्वैताविरोधीति स्पष्टमाह। तदिदं प्रतिवादिकरप्रदत्तजयपत्रिकान्यायेनास्मदनुकूलम्।

## (७०) बोधायनवृत्तिसमालोचनोपक्रमः।

इत उपरि रामानुजभाष्ये तदनुसारिग्रन्थेषु च बोधायनवृत्तिरिति काचन प्राचीना विस्तीर्णा आर्षी ब्रह्मसूत्रवृत्तिः विशिष्टाद्वैतसम्प्रदायमूलभूता अस्ति, तद्विरुद्धा च अपरिग्राह्या अद्वैतसरणिरिति यत् परैः घुष्यते, तद्विषयमधिकृत्य विमृशामः। यद्यपि पूर्वं प्रसङ्गात् किञ्चिदुक्तं, तथापि पूर्वानुक्तं किञ्चिदधिकं विमृशामः।

रामानुजभाष्ये हि उपक्रमे 'पाराशर्यवचस्सुधा'मिति श्लोके 'पूर्वाचार्यसुरक्षिता'मित्यत्र पूर्वाचार्यपदेन सामान्यत उपक्षिप्य, पश्चात् 'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इत्यनेन विशिष्यापि बोधायनः ब्रह्मसूत्रवृत्तिकारत्वेन निर्दिष्टः। रामानुजभाष्यटीकाकारादिभिश्च स एवार्थः आम्रेडितः। तच्च पूर्वमेव तत्तद्वाक्यानुवादेन विशदीकृतम्।

## (७१) रामानुजभाष्ये वाक्यसप्तकमात्रं बोधायनवृत्तिगतत्वेनाभिमतं निर्दिष्टं नाधिकम्।

तदन्तर्गतवाक्यानि कानिचित् रामानुजभाष्यकारेणानुदितानि। तानि च वक्ष्यमाणानि। रामानुजभाष्ये जिज्ञासाधिकरणे—

(१) तदाह वृत्तिकारः—'वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा' इति।

(२) वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यं—'संहितमेतत् शारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः' इति।

अत्र श्रुतप्रकाशिकायां—'पूर्वं प्रतिज्ञातं वृत्तिकारमतानुसारं वृत्तिग्रन्थेन संवादयति—तदाहेति। कर्माधिगमस्यैव पूर्ववृत्तत्वं न केवलं कण्ठोक्तं, ऐकशास्त्र्योक्त्या आक्षिप्तश्चेत्यभिप्रयन्नाह—वक्ष्यति चेति। वृत्तादित्यादिः, संहितमित्यादिश्च वृत्तिग्रन्थौ' इत्युक्तम्। अत्रैव तत्वटीकायां—'अत्र स्वोक्तौ पदार्थवाक्यार्थौ वृत्त्यापि द्रढयन्, तन्मतानुसारे तत्कृतिसंवादं दर्शयति—तदाहेति। स्वोक्तसूत्रार्थसिद्धयै सूचितं शास्त्रैक्यमपि संवादयति—वक्ष्यतीति। व्याख्यास्यमानप्रदेशान्तरविषयतया भविष्यन्निर्देशः' इति। रामानुजभाष्ये—

(३) वृत्तिरपि—'जगद्व्यापारवर्जं समानो ज्योतिषा' इति। श्रुतप्रकाशिकायां—'समानो ज्योतिषेति, ज्योतिःपरं ब्रह्म' इति विवरणम्। रामानुजभाष्ये 'अत एव इदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते' इति वृत्तिकारः स्मृतः। श्रुतप्रकाशिकायाञ्च स्पष्टीकृतं 'अभियुक्तैः—भगवद्बोधायनादिभिः। 'संहितमेतत् शारीरकं' इति हि वृत्तिकारवचः' इति। रामानुजभाष्ये ईक्षत्यधिकरणे—

(४) तदाह वृत्तिकारः—'सता सोम्य तदा संपन्नो भवति इति संपत्त्यसंपत्तिभ्यामेतदध्यवसीयते, प्राज्ञेनात्मना संपरिष्वक्त इति चाहे'ति। अत्र श्रुतप्रकाशिका—'व्याख्यानान्तरव्यावृत्त्यर्थमाह—तदाहेति। संपत्त्यसंपत्तिभ्यामिति। 'सति संपद्य न विदुस्सति संपत्स्यामह इति' 'सत आगम्य न विदुस्सत आगच्छामह इति' इत्युक्ताभ्यां संपत्तिनिर्गमाभ्यामित्यर्थः। यद्वा, परमात्मनि संपत्त्या अन्यत्रासंपत्त्या चेत्यर्थः। स्वाप्ययशब्देनासंपत्तिरप्यभिप्रेतेति वृत्तिकारस्य भावः। एतत्—परब्रह्मकारणत्वमित्यर्थः।' इति। रामानुजभाष्ये—सर्वत्रप्रसिद्धाधिकरणे—इममेव सूत्रार्थमभियुक्ता बहुमन्वते—

(५) यथाऽऽह वृत्तिकारः—'सर्वं खल्विति सर्वात्मा ब्रह्मेशः' इति। श्रुतप्रकाशिकायां विवरणं—'द्वितीययोजनोक्तार्थस्यैव सांप्रदायिकत्वमाह-इममेवेति। सर्वं खल्वित्यादिवाक्येन सर्वात्मतया उक्त ईशः परमात्मा इत्यर्थः।' इति।

श्रुतप्रकाशिकाभावप्रकाशिकायां रङ्गरामानुजोऽप्याह—'सर्वत्र प्रसिद्धोपदेशादित्यस्य व्याख्यानान्तरवर्णनं परमतानुसारेण कृतम्। अनन्तरमेव वृत्तिकारोक्तार्थवर्णनात्' इति। रामानुजभाष्ये भूमाधिकरणे—

(६) तदाह वृत्तिकारः—'भूमा त्वेवेति भूमा ब्रह्म, नामादिपरम्परया आत्मन ऊर्ध्वमस्योपदेशात्' इति। अत्र श्रुतप्रकाशिकायां विवरणम्—'तदाहेति। पूर्वनिर्दिष्टादधिकतया उत्तरोत्तरनिर्देशप्रकरणत्वात् प्राणशब्दवाच्यात् जीवात् ऊर्ध्वमुक्तः सत्यशब्दवाच्यः उपास्यः भूमा ततोऽधिकं परं ब्रह्मेति वृत्तिकारग्रन्थस्यार्थः। आत्मन ऊर्ध्वमित्यनेन प्राणशब्दनिर्दिष्टस्य जीवात्मत्वं वृत्तिकाराभिमतम्, न तु पञ्चवृत्तिप्राणपरत्वमित्यवगतम्। अतः प्राणशब्दवाच्यस्य जीवत्वमाश्रित्यैव पूर्वपक्षसिद्धान्तवर्णनं वृत्तिकाराभिमतमिति ज्ञापनं वृत्तिकारग्रन्थोपादानफलम्।' इति। रङ्गरामानुजोऽपि छान्दोग्योपनिषत्प्रकाशिकायां 'अत एव वृत्तिकृता भगवता बोधायनेनापि 'भूमा संप्रसादादध्युपदेशा'दिति सूत्रव्याख्याने प्रत्यगात्मन ऊर्ध्वमुपदेशादित्येवोक्तम्, न तु मुख्यप्राणादूर्ध्वमिति' इति वदति। रामानुजभाष्ये देवताधिकरणादनन्तरं स्वाभिमते मध्वधिकरणे—

(७) तदाह वृत्तिकारः—'अस्ति हि मध्वादिषु संभवो ब्रह्मण एव सर्वत्र निचाय्यत्वात्' इति।

अत्र श्रुतप्रकाशिकायां विवरणम्—'अब्रह्मोपासनपरत्वेन यैर्व्याख्यातं तन्मतादस्य प्रामाणिकत्वं दर्शयति—तदाह वृत्तिकार इति' इति। अत्र श्रुतप्रकाशिकायामेव 'मध्वादिष्वसम्भवा'दित्यादिसूत्रत्रयं देवताधिकरणशेषतया व्याख्यातवतां परेषां खण्डनावसरे उक्तम्—'तदयुक्तम्, वृत्तिकारानभिमतत्वात्' इति। 'तत्र वृत्तिकारानभिमतिः भाष्ये कण्ठोक्त्या दर्शिता' इति च।

वेदार्थसङ्ग्रहे 'सर्वमेकशास्त्रमिति वेदवित्सिद्धान्तः' इति वेदवित्पदेन बोधायन उक्तः। तत्र तात्पर्यदीपिकायां सुदर्शनेन विवृतं—'एवमविरोधेन निर्वाहः किमर्थ इत्यत्राह—सर्वमिति। ऐकशास्त्र्यं भगवद्बोधायनाद्यभिमतं अङ्गीकृतम्।

तत्र च विरुद्धार्थप्रतिपादने श्रुतिविरोधात्तदनादरणीयं स्यात् । अविरोधे संभवति विरुद्धार्थपरत्वेन व्याख्यानमयुक्तमिति भावः ' इति । रामानुजार्यैः निर्दिष्टेषु सप्तसु स्थलेषु बोधायनवृत्तिगततयाऽभिमतानि सप्तवाक्यान्येवोदाजहार । नातोऽधिकानि वृत्तिवाक्यानि । तत् कुत इति न ज्ञायते । एतावता परमतनिरासः स्वसिद्धान्तव्यवस्थापनञ्चासीदिति तदभिप्रायस्स्यात् । संपूर्णविस्तृतबोधायनवृत्तिग्रन्थदर्शित्वेन परैरुद्घोषितः रामानुजार्यैः किमिति अधिकानि वाक्यानि वृत्तिग्रन्थसम्बन्धीनि न प्रादर्शयत् । स एव प्रष्टव्यः ।

## (७२) बोधायनवृत्तेः भूमौ कुत्राप्यनुपलंभः । स्वर्गवासिनामेव च तयोपयोगं वदतां परेषां देवेषु विषये आशयप्रकाशः ।

बोधायनवृत्तिश्च संप्रति कुत्रापि नोपलभ्यते । बोधायनवृत्तिः अस्माकमनुपयोगिनी देवादीनामेवोपयोगिनी, तस्मात् स्वर्गादिलोक एव सा वर्तते, न भूलोके, इति श्रुतप्रकाशिकाकार एव स्पष्टं वदति । रामानुजभाष्यग्रन्थस्थद्वितीयश्लोके 'सुमनसो भौमाः पिबन्त्वन्वह'मित्यस्य विवरणावसरे हि श्रुतप्रकाशिकायामुक्तम्—'देवादीनां वृत्तिकारग्रन्थादिभिस्सुगमत्वात् भौमा इत्युक्तम्' इति। श्रुतप्रदीपिकाख्यटीकायां सुदर्शनेनैवोक्तं—'भौमाः—अधीतसाङ्गसशिरस्कवेदाः श्रुतकर्ममीमांसाः भूलोकवासिनः । देशकालान्तरादिषु वृत्त्यादिसाफल्यमिति भावः ।' इति । 'विस्तीर्णां संचिक्षिपु'रिति रामानुजभाष्यवाक्यव्याख्यानावसरे च सुदर्शनेनोक्तम्—'अनेन वृत्त्यादीनामत्रत्येषु अद्यतनजनेषु अकार्यकरत्वं सूचितम् । बोधायनेन हि अतिविस्तीर्णा वृत्तिः कृता । द्रमिडभाष्यकारादयो हि परप्रक्षप्रतिक्षेपाद्यनादरेण अतिसंक्षिप्तान् ग्रन्थानरचयन् । अतिविस्तीर्णातिसङ्कुचितग्रन्थानां साफल्यं आयुष्मद्बुद्धिमज्जनप्रचुरेषु देशकालान्तरेष्वेव भवति, न हीदानीन्तनपुरुषाणां सर्वेषां शतायुष्ट्वं, यावज्जीवं ग्रन्थपरिश्रमः, सहजधीविशेषाश्च सन्ति । तस्मात् परमतनिरासाद्यर्थं अनतिविस्तरतया सुग्रहत्वार्थञ्च सूत्रं व्याख्यातव्यमिति यावत् ।' इति ।

तत्वटीकायामपि सूचितमिदं—'न हि भौमास्सुमनस इति भूसुरमात्रोक्तिर्युक्ता । अधीतवेदवर्णत्रयार्हत्वात् मीमांसायाः । स्वतो विदुषां स्वर्गादिभुवां प्रायो न सूत्रव्याख्यानापेक्षा । सत्यामपि तस्यां विशालधीयोग्यैः वृत्त्यादिभिः ते चरितार्थाः । अतो न वृथाऽत्र भौमत्वोक्तिः' इति ।

अत्र स्वतः प्रतिभातवेदतदर्थानां देवानां भूलोकनिवासिमहर्षिभिः प्रणीतब्रह्मसूत्रतद्वृत्त्याद्यपेक्षां वदन्तः परे महर्ष्यपेक्षया देवानां ज्ञानातिशयमपलपन्ति । उक्तश्च महर्ष्यपेक्षया देवानां ज्ञानातिशयः अभियुक्तैः—'स्थावरा जङ्गमा मर्त्या ब्राह्मणा मुनयस्सुराः । शिव इत्यप्यमी भेदाश्चिदुत्कर्षनिबन्धनाः ॥' इति । वेङ्कटनाथस्तु सूत्रापेक्षा नियतं अस्ति देवानां, तद्व्याख्यानापेक्षा प्रायः नास्ति, सत्यामपि कदाचित् केषाञ्चिदपेक्षायां बोधायनादिवृत्त्यादिग्रन्थैश्चरितार्थास्ते । देवार्थं रामानुजभाष्यापेक्षा नास्ति इति वदति । रामानुजभाष्यापेक्षाप्रसक्तिमापाद्य भौमपदेन तद्वारयन्तः परे देवेषु कीदृशीं गौरवबुद्धिं वहन्तीति सहृदयाः परिशीलयन्तु इति प्रार्थये ।

बोधायनवृत्तिः शशशृङ्गायमाणा कुत्रापि नास्ति । स्वमतस्यार्षत्वप्रकटनाय परं परैः कल्पिता, इति पूर्वमेव उक्तं अस्माभिः तत्वचन्द्रिकादिग्रन्थनिरूपणेन । परे तु स्वर्गलोके अस्ति सा देवोपयोगिनी इति वदन्ति । उभयोः फलतो विशेषो नास्ति । अविद्यमानायाश्च तस्या बोधायनवृत्तेः ग्रन्थपरिमाणं ग्रन्थसहस्राणां षष्टिरिति, षट्सहस्रग्रन्थसम्मितः बोधायनवृत्तिसंक्षेपः वाक्यकारीयः इति, वाक्यभाष्यकर्ता द्रमिडः इति, द्रमिडभाष्यव्याख्याता गुहदेव इति च, श्रीभाष्यार्थमणिप्रवालदीपिकायां अप्ययमाचार्यापरनाम्ना वेङ्कटकृष्णदासेन उक्तम् । द्रमिडभाष्यस्य गुहदेवकृततट्टीकाग्रन्थस्य च ग्रन्थपरिमाणं परं नोक्तम् । कुत इति न ज्ञायते । तयोरपि यत्किञ्चित् ग्रन्थपरिमाणमुक्तञ्चेदपि कोऽपि न विवदेत्, ग्रन्थानुपलम्भात् । तस्य धैर्यं नास्ति वा, अस्तित्वेऽपि कारणान्तरात् नोक्तवान्वा, इति न ज्ञायते ।

## (७३) बोधायनमहर्षिद्वित्वस्याप्रामाणिकत्वं परकल्पितस्य वृत्तिकारस्य महर्षिभिन्नत्वम् ।

किञ्च परैः ब्रह्मसूत्रवृत्तिकृत्त्वेन परिकल्पितः पुरुषः न बोधायनमहर्षिर्भवितुमर्हति । यतः प्रसिद्धात् बोधायनमहर्षेरस्य महद्वैलक्षण्यम् । वैलक्षण्यमुपरि स्फुटीकरिष्यते । बोधायनमहर्षिद्वित्वं चाप्रामाणिकम् । अतः यस्य कस्यापि पुरुषस्य वृत्तिकर्तुः महर्षित्वं बोधायननामकत्वं च वृत्तेरार्षत्वाय परैः कल्पितमिति सम्यक् ज्ञायते। तथाहि—यः प्रसिद्धो बोधायनमहर्षिः धर्मगृह्यश्रौतसूत्रस्मृतिग्रन्थकर्ता सः धर्मसूत्रे 'पूतः पञ्चभिर्ब्रह्मयज्ञैरथोत्तरं देवतास्तर्पयति' इत्युपक्रम्य देवतातर्पणं विदधानः भवस्य भवादिनामाष्टकोच्चारणपूर्वकं तर्पणं, भवपत्न्याः, भवसुतस्य स्कन्दविनायकादेः तर्पणं, नारायणस्य केशवादिनामोच्चारणपूर्वकं तर्पणं, लक्ष्मीगरुडादीनां च तर्पणं, तुल्यमेव विधत्ते । 'पुनराचम्य दक्षिणे पादाङ्गुष्ठे पाणिना निस्रावयति—'अङ्गुष्ठमात्रः....विश्वभु'गिति' इति भोजनोत्तरं दक्षिणपादाङ्गुष्ठे उदकनिस्रावणं मन्त्रार्थपरमेश्वरतृप्त्यर्थं विदधाति । 'उपनिषदो वेदादयः....रुद्राः पुरुषसूक्तं....इति पावनानि' इति रुद्रपुरुषसूक्तयोः तुल्यं पावनत्वं बोधयति । 'दुर्गा व्याहृतयो रुद्रा महादोषविनाशनाः' इति च वदति ।

अन्यत्र च बोधायनसूत्रे 'अथातो द्विजातीनां त्रिपुण्ड्रधारणविधिं व्याख्यास्यामः भूत्यै न प्रमदितव्यमिति विज्ञायते....इत्याह भगवान् बोधायनः' इति भस्मधारणं विधत्ते। 'अथातो विभूतिसंपादनधारणविधिं व्याख्यास्यामः' इत्यादिना भस्मसंपादनतद्धारणविधिं ब्रूते। 'अथातो महापुरुषस्याहरहः परिचर्याविधिं व्याख्यास्यामः....इत्याह भगवान् बोधायनः' इति विष्णोस्सपरिकरां पूजां विधत्ते । 'अथातो महादेवस्याहरहः परिचर्याविधिं व्याख्यास्यामः....इत्याह भगवान् बोधायनः' इति शिवस्य सपरिकरां पूजां विधत्ते। बोधायनीयशिवविष्णुपूजाविधिमध्ये च विशेषो वर्णितः अप्पय्यदीक्षितैः शिवतत्वविवेके—'बोधायनश्च शिवपूजाविधौ ब्रह्मविष्ण्वोस्तदावरणे निवेशात्, देवतान्तरपूजाविधिषु शिवस्यावरण-

देवतास्वसंनिवेशाच्च, तस्य सर्वोत्कर्षं सूचयामास' इति। 'अथातो महादेवस्य पादोदकप्राशनविधिं व्याख्यास्यामः' इत्यादिना शिवपादोदकप्राशनं विधत्ते बोधायनः। बोधायनवचनानि च स्मृतिमुक्ताफलपुरुषार्थप्रबोधादिनिबन्धग्रन्थेषु निर्दिष्टानि। 'बोधायनीयादिषु महादेवशब्दस्य व्यस्तोऽपि रुद्रे प्रयोगस्संप्रतिपन्नो दृश्यत इति चेत्, सत्यं प्रकरणादिवशात्तु तथा तत्र निर्णयः' इति सच्चरित्ररक्षायां वेङ्कटनाथेनाप्यङ्गीकृतानि पूर्वनिर्दिष्टबोधायनवचनानि ॥

भस्मसंपादनधारणे एव विदधानः पुण्ड्रान्तरं तद्द्रव्यसंपादनं चाविदधानः बोधायनः विष्ण्वाराधनसमयेऽपि भस्म धृत्वैव पूजनं करणीयमभिप्रैति। वैखानसादिवैष्णवशास्त्रेष्वपि भस्म धृत्वैव वैदिकेन विष्णोराराधनं कर्तव्यमिति चोदितम्। हरदत्तापराभिधानस्सुदर्शनाचार्यः तात्पर्यसंग्रहापराभिधायां श्रुतिसूक्तिमालायां 'बोधायनेन मुनिना बहुशः प्रणीतम्' 'बोधायनः कथितवानवयुत्य गृह्ये' इत्यादिना परमेश्वराभ्यर्चनविधायकत्वेन बोधायनं वदति। यत्तु सच्चरित्ररक्षायां वेङ्कटनाथः 'उक्तं च बोधायनेन—'होमपूजादिसमये सायं प्रातस्समाहितः। ऊर्ध्वपुण्ड्रधरो विप्रो भवेच्छुद्धो न चान्यथा ॥' इति। अन्यथेत्यनेन त्रिपुण्ड्रादेर्धारणं ऊर्ध्वपुण्ड्रादेरधारणं च निषिध्यते' इत्याह, तत् तदीयतान्त्रिकोर्ध्वपुण्ड्रधारणस्य बोधायनमहर्षिसंमतत्वकल्पनाभिनिवेशेन कल्पितबोधायनवचनमप्रामाणिकम्। एवमेव वेङ्कटनाथः स्वीयाभिनिवेशेन 'अथातो महापुरुषस्याहरहः परिचर्याविधिं व्याख्यास्यामः' इत्यादिबोधायनवचने 'इदं विष्णुर्विचक्रमे इत्येतया चरुं प्राश्नीयात्' इति, 'अहं वैष्णवोऽस्मीति यः प्रतिब्रूयात् तस्मै शेषं प्रदद्यात् एतैरेव मन्त्रैः प्राश्नीयात्' इति च अधिकमपि अंशं कल्पितवान्। स चाधिकभागः स्मृतिमुक्ताफलादिनिबन्धेषु न दृश्यते। वैदिकः बोधायनमहर्षिश्च कथं तान्त्रिकं निर्माल्यभक्षणादिकं विदध्यात्। तस्मात्तत् वेङ्कटनाथकल्पितमेव। एवंच प्रसिद्धो बोधायनमहर्षिः परमाद्वैती शिवभक्तश्च।

परपरिकल्पितस्तु बोधायनः एतद्विलक्षणः परमैकान्ती शिवं परत्वेन नाङ्गीकरोति। प्रत्युत शिवं द्वेष्टि। वेङ्कटनाथश्च तत्वमुक्ताकलापान्तर्गतस्य 'वैदिकस्वीकृतत्वम्' इत्यंशस्य 'वेदविदुत्तमैः बोधायनटङ्कप्रभृतिभिः सर्वैः भगवत एव (नारायणस्य) परत्वेनाङ्गीकृतत्वं वैदिकस्वीकृतत्वम्' इति सर्वार्थसिद्धौ विवरणेन बोधायनं परमैकान्तिनं ब्रूते।

## (७४) विंशतिलक्षण्यां मध्यगतसंकर्षकाण्डसमालोचनम्।

परकल्पितो बोधायनः विंशतिलक्षणं मीमांसाशास्त्रमेकं शास्त्रमिति वदति, मीमांसापादुकायामपीदमुक्तं वेङ्कटनाथेन—'मीमांसेत्येकमेतत् श्रुतिविषयनयस्तोमसङ्ग्राहि शास्त्रं षट्काध्यायाङ्घ्रिभेदैर्भिदुरतरतनुः सा त्रिभिः काण्डभेदैः। सङ्गत्या च त्रयाणां क्रमनियतिरपि स्यादिहौचित्यवत्या विंशत्या लक्षणैः खल्वियमवयविनी वृत्तिकारोपदिष्टा॥' इति। द्वादशलक्षणी पूर्वमीमांसा, चतुर्लक्षणी उत्तरमीमांसा च प्रसिद्धा जैमिनिबादरायणाभ्यां प्रणीता कर्मकाण्डं ब्रह्मकाण्डमिति च प्रथिता। मध्यमा चतुर्लक्षणी सङ्कर्षणकाण्डं देवताकाण्डमिति च प्रसिद्धा। सा च जैमिनिकृता इति सुप्रसिद्धम्। अत एवाप्पय्यदीक्षितकृतवादनक्षत्रमालायां ऐकशास्त्र्यनिराकरणवादे उक्तम्—'यो हि द्वादशलक्षण्या स्वरूपप्रमाणसाधनफलैस्सह कर्मजातं निर्णीय तत्रासूत्रितान् कांश्चित् तदुपयुक्तान् न्यायानालक्ष्य तत्सङ्ग्रहार्थं द्वादशलक्षणीशेषं सङ्कर्षकाण्डमकार्षीत्' इति।

परिमले सङ्कर्षकाण्डस्यैव देवताकाण्डमिति नाम इत्युक्तम्—'यद्यपि सङ्कर्षकाण्डः न देवताविचारार्थं प्रवर्तितः, किन्तु, द्वादशलक्षण्यविचारितनानाविषयन्यायविचारात्मकः तत्परिशिष्टः तन्त्रप्रसङ्गवदुपदेशातिदेशसाधारण्येन प्रकीर्णकः प्रवर्तितः, न हि तत्र देवताविचारेण उपक्रमः उपसंहारो वा अस्ति, तथाऽपि सङ्कर्षे देवताविधानरहितेषूपांशुयाजादिषु देवता अस्ति न वा, इत्यादिदेवताविचारभूयस्त्वात् भूम्ना सङ्कर्षकाण्डस्यैव देवताकाण्ड इत्यपि व्यवहारः, सङ्कर्षस्य च भवस्वामिना भाष्यं कृतम्' इत्यादिग्रन्थेन।

## (७५) जैमिनिसंकर्षकाण्डविलक्षणः पराशरभट्टाभिमतसंकर्षकाण्डः परपरिकल्पितः ।

परस्तु पराशरभट्टः रामानुजशिष्यकूरेशसुतः तत्वरत्नाकराभिधे ग्रन्थे काशकृत्स्नप्रणीतं देवताकाण्डमुदाजहे। स च काशकृत्स्नप्रणीतः देवताकाण्डः शशशृङ्गायमाणः परपरिकल्पितबोधायनवृत्तिसोदरः। तमङ्गीकृत्यैव वेङ्कटनाथः विरोधं परिहरेति। परकल्पितः अविद्यमानः बोधायनः वृत्तिकारः 'जैमिनीयेन षोडशलक्षणेने'ति ग्रन्थेन मध्यमकाण्डस्य विद्यमानस्य सङ्कर्षाभिधस्य जैमिनिकृतत्वमाह। पराशरभट्टस्तु विद्यमानः अविद्यमानं काशकृत्स्नीयं देवताकाण्डं मेलयित्वा षोडशलक्षणत्वं वर्णयति, अयं विरोधः। अस्य परिहारस्तु न्यायपरिशुद्धौ वेङ्कटनाथेनोक्तः—'अनयोः वृत्तिग्रन्थतत्वरत्नाकरग्रन्थयोः देवताकाण्डस्य जैमिनीयत्वकाशकृत्स्नीयत्वोक्ती तादधीन्यादिविवक्षया समानार्थे गमयितव्ये' इति। तत्वटीकायामपि उक्तं तेनैव—'षोडशलक्षणेन इति—द्वादशाध्यायीचतुरध्यायीरूपकाण्डद्वयेन। अत्र, 'कर्मदेवताब्रह्मगोचरा सा त्रिधोद्भभौ सूत्रकारतः। जैमिनेर्मुनेः काशकृत्स्नतो बादरायणादित्यतः क्रमात् ॥' इति तत्वरत्नाकरोक्तेश्च वृत्तेश्च क्वचिदुपचारेणाविरोधो ग्राह्यः'। इति।

अधिकरणसारावल्यामपि उक्तं—'तत उपरि चतुर्लक्षणी देवतार्था' इत्यनन्तरं, 'वृत्तिग्रन्थे तु जैमिन्युपरचिततया षोडशाध्याय्युपात्ता सङ्कर्षः काशकृत्स्नप्रभव इति कथं तत्वरत्नाकरोक्तिः। अत्र ब्रूमस्सदुक्तौ न वयमिह मुधा बाधितुं किञ्चिदर्हाः निर्वाहस्तूपचारात् क्वचिदिह घटते ह्येकतात्पर्ययोगः ॥' इति।

वेङ्कटनाथः काशकृत्स्नीयं देवताकाण्डमभ्युपगम्यैव सेश्वरमीमांसायामुपक्रमे 'स जयति जैमिनिरादौ जयति पुनः काशकृत्स्नोऽपि। नारायणावतारो जयति परं बादरायणः श्रीमान् ॥' इति मङ्गलश्लोकं रचितवान्।

## (७६) परकल्पितसंकर्षकाण्डे विष्णुपरतया अन्तिमसूत्रत्रयमस्तीति ऐतिह्यं वेङ्कटनाथो वदति ।

काशकृत्स्नीयदेवताकाण्डमभिप्रेत्यैव तत्त्वटीकायामेवं वदति वेङ्कटनाथः—'एवं तर्किते कर्मणि, सङ्कर्षकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवतैव स्वरूपभेदगुणप्रकर्षैः निरकृष्यत । तत्समाप्तौ च 'अन्ते हरौ तद्दर्शनात्' 'स विष्णुराह हि' तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति विचारयिष्यमाणमुपचिक्षेप इति तत्त्ववृद्धाः ।' इति । शतदूषण्यामपि ऐकशास्त्र्यसमर्थनवादे—'देवताकाण्डश्च कर्मकाण्डशेषतया भाष्यकारैः परिगृहीतम् । 'तदुक्तं सङ्कर्षे' इति तत्रत्यसूत्राणि चोदाहरन्ति । तस्य च काण्डस्य उपसंहारे 'अन्ते हरौ तद्दर्शनात्' इति देवताकाष्ठां प्रदर्श्य, 'स विष्णुराह हि' इति सर्वदेवताराधनानां तत्पर्यवसानाय तस्य सर्वान्तरात्मत्वेन व्याप्तिं प्रतिपाद्य, 'तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति तस्यैव वेदान्तवेद्यपरब्रह्मत्वोपक्षेपेण उपसंहारात् सामान्यतोऽपि विशेषतश्च ईश्वरः प्रस्तुत इति तत्वविदां संप्रदायः' इत्युक्तम् ।

'इति तत्त्ववृद्धाः' 'इति तत्त्वविदां सम्प्रदायः' इति च ऐतिह्यमात्रं प्रमाणं काशकृत्स्नीयदेवताकाण्डे इति सूचयति । अविद्यमानदेवताकाण्डान्तिमवाक्येन च शारीरके ब्रह्मशब्दार्थं विष्णुं निर्धारयितुमिच्छति वेङ्कटनाथः । रामानुजार्यसुदर्शनापेक्षया च अभूतकल्पनाविषये प्रागल्भ्यातिशयोऽस्य । शतदूषण्यामष्टमवादे 'शबरस्वामिप्रभृतिभिः सङ्कर्षकाण्डांशस्थसूत्रोपादानात्' इत्युक्तम् । स तु सङ्कर्षकाण्डः अन्यः जैमिनिकृतः, न तु वेङ्कटनाथाभिमतकाशकृत्स्नप्रणीतसङ्कर्षकाण्डः । नयप्रकाशिकाख्यरामानुजभाष्यटीकायां मेघनादारिसूरिणा 'देवताकाण्डस्तु अस्माभिरदृष्टचरः । अतस्तत्प्रक्रिया मृग्या' इति वदता परकीयगोष्ठीप्रविष्टेनापि तत्वमनपह्नुवानेन आर्जवं प्रकटीक्रियते । न वेङ्कटनाथादिवत् यत्किञ्चिदपि धैर्येण हठात् साधयितुं प्रयत्यते । सर्वत्रापि ऋजवस्सन्ति । वस्तुतो भगवदनुग्रहपात्रं सः ।

## (७७) नयमयूखमालिकायां संकर्षकाण्डद्वयस्य प्रसिद्ध्यप्रसिद्धिसूचनम् ।

अप्पय्यदीक्षितैः नयमयूखमालिकायां वैष्णवविशिष्टाद्वैतमतानुसारेण कृतायां जिज्ञासाधिकरणे—'जैमिनिना तु उदाहृतं देवताध्यानविधानं तत्तद्देवतावाचिशब्दध्यानविषयमिति निरूपितं सङ्कर्षे' इति, 'वृत्तिकारेण संहितमेतत् जैमिनीयेन षोडशलक्षणेनेति कर्मविचारार्थया द्वादशलक्षण्या देवताविचारार्थया चतुर्लक्षण्या च ऐकतन्त्र्यं प्रतिपादित'मित्युदाहृतं भाष्ये । तत्र कर्मविचारभागे द्वादशानां लक्षणानां धर्मप्रमाणतद्भेदतच्छेषशेषिभावाद्यर्थभेदः सुलभसिद्धः । देवताविचारभागे चतुर्णां लक्षणानामर्थभेदं इत्थमाहुः—'स्वरूपमादौ तद्भेदः तदुपासनपूर्वकम् । फलञ्च देवताकाण्डे देवतानान्तु कथ्यते ॥ इति ।' इति च उक्तम् ।

अत्र जैमिनिकृते प्रसिद्धसङ्कर्षकाण्डे देवताध्यानविधानं तत्तद्देवतावाचिशब्दध्यानविषयमिति निरूपितमित्युक्तम् । एतेन स विषयः उपलभ्यमाने तत्र सङ्कर्षकाण्डे सर्वैरपि प्रत्यक्षमेव द्रष्टुं शक्य इति सूचितम् । कर्मविचारार्थायां द्वादशलक्षण्यामपि द्वादशानामध्यायानां अर्थभेदः सुलभसिद्धः न तस्य ज्ञाने श्रमः इत्युक्तम् । प्रत्यक्षत उपलभ्यमानत्वात् द्वादशलक्षण्याः तत्रार्थभेदः सुलभसिद्ध इति युज्यत एव । देवताविचारभागे विशिष्टाद्वैतिभिः एकस्मिन्शास्त्रे मध्यमकाण्डत्वेनाभ्युपगते चतुर्णां लक्षणानां अर्थभेदमित्थमाहुः विशिष्टाद्वैतिनः 'स्वरूपमादौ' इत्यादिकारिकया । स चार्थभेदः न प्रत्यक्षतो द्रष्टुं शक्यस्सर्वैरपि । यतः स देवताकाण्डः शशशृङ्गायमाणः केवलं विशिष्टाद्वैतसिद्धान्तावलम्बिपूर्वाचार्यवचनश्रवणमात्रवेद्यः इति स्पष्टं सूचितम् । विशिष्टाद्वैत्यभिमतसङ्कर्षकाण्डः प्रसिद्धजैमिनिकृतसङ्कर्षकाण्डाद्विलक्षणः शब्दातिरिक्तदेवताभ्युपगमानभ्युपगमास्यां इत्यपि सूचितम् । विद्यमानजैमिनिकृतसङ्कर्षकाण्डे अन्तिमं सूत्रं विद्यते वाऽन्यकालत्वाद्यथा याज्यासंप्रैषो यथा याज्यासंप्रैषः' इति । पराभि-

मतसङ्कर्षकाण्डे तु, ‘अन्ते हरौ तद्दर्शनात्’ ‘स विष्णुराह हि’ ‘तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते’ इति ।

## (७८) वेङ्कटनाथोक्ताप्रसिद्धसंकर्षकाण्डं तद्वाक्यप्रामाण्यभ्रमेण जयतीर्थोऽप्यनुवदति ।

वेङ्कटनाथग्रन्थावलोकनेन तदुक्तौ प्रामाणिकत्वभ्रान्त्या जयतीर्थोऽपि तत्वप्रकाशिकायां ‘ब्रह्मशब्दश्च विष्णावेव’ इति आनन्दतीर्थभाष्यविवरणावसरे एवं वदति—‘ब्रह्मेति, विष्णावेव मुख्य इति शेषः। ब्रह्मशब्दस्यानेकार्थत्वेऽपि तस्य विष्णावेव मुख्यत्वात् मुख्यस्यैव ग्राह्यत्वात् स एव सूत्रकारविवक्षितो ज्ञायते इति भावः। ‘स विष्णुराह हि’ ‘तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते’ इति निरन्तरसूत्रद्वये ब्रह्मत्वेन नारायणस्यैव प्रस्तुतिं सूचयति विष्णुग्रहणेन’ इति ।

## (७९) आनन्दतीर्थस्तु तृतीयं अत्यपूर्वं संकर्षकाण्डं नारायणशेषपैलकृतं वदति ।

आनन्दतीर्थस्तु अपूर्वश्रुतिस्मृत्यादिसर्वकल्पकः अनुव्याख्याने एवं लिखति–‘देवमीमांसकाद्यन्तं स्वयं भगवता कृतम्। मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा॥’ इति। ‘अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्यासाभ्याम्’ इति च संकर्षणसूत्रं भाष्ये व्यपदिशति। तदिदं सूत्रं मध्वमतविध्वंसनेऽपि निर्दिष्टम्। एवं देवताकाण्डविषये महान् कोलाहलः।

## (८०) मानमेयरहस्यश्लोकवार्तिकाभिधनवीनग्रन्थोक्तनूतन-विषयसमालोचनम् ।

विंशतिलक्षण्या मध्यमं देवताकाण्डं प्रति महामहोपाध्यायैः पण्डितरत्न-विरुदैः लक्ष्मीपुरं श्रीनिवासाचार्यैः प्रणीते मानमेयरहस्यश्लोकवार्तिकाभिधे ग्रन्थे उक्ताः श्लोकाः इमे—

'तच्छास्त्रमनुरुध्यैव कर्मब्रह्मात्मनोरपि ।
शास्त्रयोस्सन्धिरुदितः साङ्कर्षे चात्र मध्यमे ॥'

तच्छास्त्रमित्यस्य पूर्वं प्रकृतं पाञ्चरात्रशास्त्रमित्यर्थः ।

'प्रतिपाद्यमिदं तत्र पूर्वाचार्यनिरूपितम् ।
स्वरूपमादौ तद्भेदः तदुपासनपूर्वकम् ॥

फलञ्च देवताकाण्डे देवतानान्तु कथ्यते ।
ततश्च संहितं शास्त्रमेतद्विंशतिलक्षणम् ॥

इति वृत्तिकृतां वाक्यमेतत्तात्पर्यगर्भितम् ।
एतेन कर्ममीमांसासिद्धान्ते जडविश्रुतः ॥

निर्दैववादो निरस्तं विद्दैववादोऽप्यपाकृतः ।
तं च सङ्कर्षकाण्डन्तु काशकृत्स्नविनिर्मितम् ॥

प्राहुः केचित् बुधास्त्वन्ये विदुर्जैमिनिनिर्मितम् ।
समाख्ययोल्लिखन्त्यन्ये सङ्कर्षणविनिर्मितम् ॥

सर्वथा पाञ्चरात्रस्य सिद्धान्तमनुवर्तते ।
पूर्णप्रज्ञैरनुव्याख्याप्रबन्धे देवकाण्डगः ॥

द्वितीयलक्षणश्शेषप्रणीत इति भाषितम् ।
स एष सङ्कर्षकाण्डः मीमांसाभाष्यकर्तृभिः ॥

आचार्यशबरैः पूर्वाचार्यैश्च समुदाहृतः ।
अन्ते हरौ स विष्णुश्च तं ब्रह्मेति च सूत्रणात् ॥

अथातो ब्रह्मजिज्ञासा चेति शास्त्रं सुसङ्गतम् ।' इति ।

एवमेव मैसूर् महाराजसंस्कृतमहापाठशालापत्रिकायां विशिष्टाद्वैतमधिकृत्य कृते प्रसङ्गेऽपि एते निरूपयन्ति ।

अत्र ग्रन्थे इमे श्रीनिवासाचार्याः, प्रसिद्धं, इदानीं मुद्रितमुपलभ्यमानं, 'प्रदानवदेव तदुक्तम्' इत्यधिकरणे भगवत्पादैः रामानुजभाष्यकारैश्च 'तदुक्तं सङ्कर्षे—'नाना वा देवता पृथग्ज्ञानात्' इत्यनूद्यमानं, जैमिनिकृतं, भवस्वामि-भाष्योपेतं, द्वादशलक्षण्याश्शेषभूतञ्च, देवताकाण्डापराभिधं सङ्कर्षकाण्डं विस्मृत्यैव, अथवा तददृष्ट्वैव, काशकृत्स्नप्रणीततया पराशरभट्टेन आदावुक्तं, वेङ्कटनाथेन पुनः पुनः तथैव आम्रेडितं, अप्रसिद्धं, परैः बोधायनवृत्तिवदेव सङ्केतेन कल्पितं, सङ्कर्ष-काण्डनामकतया देवताकाण्डनामकतया च परैर्व्यवहृतं, अन्ते हरिरिति विष्णु-रिति च तत्र कीर्त्यते इति वेङ्कटनाथेन, तदीयवाक्यप्रामाण्यबुद्धया मध्वग्रन्थटी-काकारजयतीर्थेन च, कथितं, अत एव स्वीयविश्वासातिशयपात्रभूतं, ग्रन्थविशेषमेव परमतात्पर्येण आमनन्ति । अभिनवश्रुतिस्मृतिपुराणेतिहासादिसर्वग्रन्थकल्प-कतया सुप्रसिद्धमध्वाचार्येण स्वीयदेवताकाण्डः अनूदितः इति, तत्र च अध्याय-चतुष्टयवति द्वितीयाध्यायः शेषप्रणीतः इति मध्वकीर्तनात् सङ्कर्षणाभिधेन शेषेण प्रणीतत्वं निमित्तीकृत्य अध्यायचतुष्टयात्मकस्य इतरप्रणीतेतराध्यायत्रयवतोपि सङ्कर्षकाण्ड इति नाम सम्पन्नमिति सङ्कर्षकाण्डपदनिरुक्तिः सुश्लिष्टेति च, परमसन्तोषेण वर्णयन्ति । अहो विदुषामपि अभिनिवेशप्रयुक्तो महान् मोहः ।

## (८१) शाबरभाष्ये जैमिनीयसंकर्षकाण्डस्यैवानुवादः न पराभिमतस्य ।

आचार्यशबरस्वामी स्वीयं देवताकाण्डं सङ्कीर्तयतीति कथयति श्रीनिवासा-चार्यः । एवमेव वेङ्कटनाथोऽपि वदति । तत्तु अविमृश्योक्तं, यतः प्रसिद्धमेव सङ्कर्षकाण्डं कथयति शबरस्वामी । न तु अपूर्वं तदीयं सङ्कर्षकाण्डमिति प्रामाणिका एव परिशीलयन्तु । शाबरभाष्ये हि दशमचतुर्थचरणे सप्तविंशाधिकरणे—'विधिनिगमभेदः प्रकृतौ कृतः, स्विष्टकृद्विकारश्च वनस्पतिरिति सङ्कर्षे वक्ष्यते । तस्मात् तत्रापि विधिनिगमभेदः कर्तव्यः' इति वाक्यमस्ति । अत्र च प्रसिद्धं जैमिनिकृतं सङ्कर्षकाण्डमेवानुवदति शबरस्वामी, न तु पराभिमतं सङ्कर्षकाण्डं,

प्रसिद्धसङ्कर्षकाण्ड एव हि स्विष्टकृद्विकारः वनस्पतिरित्यादिः द्वादशलक्षणी-परिशिष्टः विचारः क्रियते। तदर्थमेव स कृतः जैमिनिमहर्षिणा। न तु जैमिनिः परमैकान्ती परमशिवविद्वेषी पाञ्चरात्रसिद्धान्ताभिनिविष्टः। येन विष्णुरेव ब्रह्म, न शिवः इत्यादिं पराभिमतसङ्कर्षकाण्डान्तर्गतं विचारं कुर्यात्। परमवैदिकः खलु जैमिनिः, न तान्त्रिकः। शुद्धवैदिकः जैमिनिरिति पुरुषार्थ-प्रबोधे प्रोक्तम्।

शाबरभाष्ये च पूर्वनिर्दिष्टात् स्थलादन्यत्र कुत्रापि न संकर्षकाण्डप्रस्तावः। रामानुजार्योऽपि वेदान्तसारे जिज्ञासाधिकरणे—'कर्मणां च प्रकृतिविकृति-रूपाणां धर्मार्थकामरूपपुरुषार्थसाधनतानिश्चयः 'प्रभुत्वादार्त्विज्यम्' इत्यन्तेन सूत्रकलापेन ससंकर्षणेन कृतः' इति वदन् प्रसिद्धजैमिनिकृतसंकर्षकाण्डमेव निर्दिशति॥

(८२) जैमिनिसंकर्षकाण्डस्य देवताकाण्डनामबीजं परिमलोक्तम्।

प्रसिद्धसङ्कर्षकाण्डस्य देवताकाण्ड इति नाम्नि बीजन्तु—

(१) देवताविधानरहितेषूपांशुयाजादिषु देवता अस्ति, न वा,

(२) प्रयाजादिषु देवतावाचिनः समिद्बर्हिरादिशब्दाः दर्शपूर्णमा-साङ्गप्रसिद्धसमिद्बर्हिरादिपराः, तदन्यपरा वा,

(३) अग्निं होत्रायावह स्वं महिमानमावहेत्यत्र होत्रशब्दोक्तहोम-द्रव्यार्थत्वेन श्रुतः स्विष्टकृदग्निः आहवनीयो, गार्हपत्यो वा,

(४) पशौ यष्टव्या वनस्पतिदेवता पश्वङ्गयूपरूपा, अन्या वा,

(५) स्वाहा देवा आज्यपा जुषाणा इत्यत्राज्यपाः सकलप्रयाजानु-याजदेवताः, उत्तमप्रयाजानुयाजमात्रदेवता वा,

(६) ग्रहाणां वैराजस्य स्तोत्रायेत्यादिचतुर्थीनिर्दिष्टानि स्तोत्राणि देवताः, आग्नेयं गृह्णातीत्यादितद्धितनिर्दिष्टा अग्न्यादयो वा,

(७) यां देवतां वषट्करिष्यन् स्यात्तां मनसा ध्यायेदिति देवतावाचि-शब्दध्यानविधिः, देवतार्थध्यानविधिर्वा,

(८) 'यजेति द्व्यक्षरं येयजामह इति पञ्चाक्षरम्' इति विहितयोः यजयेयजामहयोः अग्निं विष्णुमित्यादिद्वितीयान्तदेवतानां निर्देशः कार्यो, न वा,

(९) 'आवह देवान् यजमानाये'ति प्राकरणिकसकलदेवताविषयो वा, 'अग्निमग्न आवहे'त्यादिनिर्देक्ष्यमाणाग्न्यादिदेवतामात्रविषयो वा,

(१०) 'देवान् यजे'ति प्रथमानूयाजोपक्रमप्रैषे देवानिति शब्दः प्रथमानूयाजदेवताविषयः, सर्वानूयाजदेवताविषयो वा, इत्यादिदेवताविचार-भूयस्त्वम्, इति परिमले प्रदानाधिकरणे स्पष्टमुक्तम्।

अत्र च सङ्कर्षकाण्डे देवताकाण्डापराभिधे 'स्वरूपमादौ तद्भेदः तदुपासनपूर्वकम्। फलञ्च देवताकाण्डे देवतानान्तु कथ्यते॥' इति परकीयपूर्वाचार्य-निरूपितप्रतिपाद्यभेदो न कथितः। नाप्यन्ते हरिशब्देन वा विष्णुशब्देन वा देवता कीर्तिता। नापि पाञ्चरात्रसिद्धान्तानुसरणमत्र सङ्कर्षकाण्डे। नापि कर्मब्रह्मकाण्डद्वयसन्ध्यर्थमसौ मध्यमः सङ्कर्षकाण्डः प्रस्तुतः। तस्मात् परोक्तं सर्वमपि अभित्तिचित्रायमाणम्।

## (८३) आनन्दगिरिकथितः देवताकाण्डशब्दः न परकीय-देवताकाण्डपरः।

माण्डूक्योपनिषत्कारिकासु वैतथ्यप्रकरणे 'लोका इति लोकविदो देवा इति च तद्विदः' इति पद्यविवरणावसरे आनन्दगिरीये 'अग्नीन्द्रादयो देवा-स्तत्फलदातारः नेश्वरस्तथा इति देवताकाण्डीयाः' इति उक्तं देवताकाण्डपद-मपि प्रसिद्धं सङ्कर्षकाण्डमेवाभिप्रैति। न पराभिमतं देवताकाण्डमिति बोध्यम्।

## (८४) लक्ष्मीपुरं श्रीनिवासाचार्योल्लेखायोगः।

यत्तु कश्चन उल्लेखः श्रीनिवासाचार्यैरेव, जैमिनिना कर्मकाण्डदेवताकाण्ड-ब्रह्मकाण्डाख्यं काण्डत्रयमपि कृतं, इति मानमेयरहस्यश्लोकवार्तिके निरूपितः

ऐकशास्त्र्यसमर्थनतात्पर्येण—'कर्मकाण्डो देवकाण्डो ब्रह्मकाण्ड इति त्रयम् । कृतं जैमिनिनैवेति चोल्लिखन्ति परे बुधाः ॥ जैमिनीयं ब्रह्मसूत्रमावापोद्वापतः पुनः । पर्यष्कार्षीद्व्यास इति सन्दर्भेणोहितुं क्षमम् ॥ अनेकेषां मतं ब्रह्मसूत्रेषूदाहृतं ततः । ब्रह्मसूत्राण्यप्यनेकान्यासन्निति च कल्प्यते ॥' इत्यादिभिः श्लोकैः । पूर्वोक्तपत्रिकायामपि विशिष्टाद्वैतविषयकप्रसङ्गे एवमेवोक्तं तैः । नायमुल्लेखस्समीचीनः । एवं सति बादरायणाचार्यैरपि कर्मकाण्डसूत्राण्यारचितानीत्यपि उल्लेखः प्रसजेत् । यतः पूर्वमीमांसायां एकादशाध्यायप्रथमपादे नवमाधिकरणे 'विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः' इति सूत्रमस्ति । तत्र च शावरभाष्यं—'तन्त्रेण प्रयोगं बादरायणो मन्यते स्म' इत्यादि । अत्र कर्मप्रयोगविषये बादरायणमतमुदाहृतं जैमिनिसूत्रे । अतः कर्मसूत्राण्यप्यनेकानि आसन्निति कुतो न कल्प्यते ? अस्माद्दृशोल्लेखस्यावधिः कः ?

## (८५) प्रपञ्चहृदयाभिधग्रन्थस्थदेवताकाण्डविषयकनानाविरुद्धकल्पनानामप्रामाण्यम् ।

अज्ञातकर्तृके सन्दिग्धप्रामाण्ये प्रपञ्चहृदयाभिधग्रन्थे देवताकाण्डविषयकः विचारः एवमस्ति—तत्र उपरि मुद्रितः पाठः 'तदिदं (मीमांसाशास्त्रं) विंशत्यध्यायनिबद्धम् । तत्र षोडशाध्यायनिबद्धं पूर्वमीमांसाशास्त्रं पूर्वकाण्डस्य धर्मविचारपरायणं जैमिनिकृतम् । तदन्यदध्यायचतुष्कं उत्तरमीमांसाशास्त्रं उत्तरकाण्डस्य ब्रह्मविचारपरायणं व्यासकृतम्' इति । अधः मुद्रितं पाठान्तरमेवं—'तत्र द्वादशाध्यायं पूर्वमीमांसाशास्त्रं पूर्वकाण्डस्य धर्मविचारपरायणं जैमिनिकृतम् । तदन्यदध्यायाष्टकं उत्तरमीमांसाशास्त्रं ब्रह्मकाण्डस्य (मन्त्र) देवताब्रह्मविचारपरायणं व्यासकृतम् । तत्राध्यायचतुष्टयं देवताकाण्डस्य (मन्त्र) देवतातत्वविचारपरायणम् । तदितरचतुष्टयं ब्रह्मकाण्डस्य ब्रह्मविचारपरायणम्' इति । अत्र पाठद्वयेऽपि देवताकाण्डस्य कर्तृविषये जैमिनिकृतत्वव्यासकृतत्वरूपपरस्परविरुद्धार्थकथनम् । तथा प्रतिपाद्यविषयेऽपि धर्मविचारपरायणत्वदेवतातत्वविचारपरायणत्वरूपपरस्परविरुद्धार्थकथनं दृश्यते ।

तथा उपरि मुद्रितपाठे 'तथा देवताकाण्डस्य सङ्कर्षेण (र्षणेन) भाष्यं कृतम्' इति ग्रन्थेन देवताकाण्डभाष्यकर्ता सङ्कर्ष इत्युक्तम्। देवताकाण्ड-सूत्रस्य कर्ता सङ्कर्षणः इति कस्यचिदुल्लेखः पूर्वं प्रदर्शितः। अत्र तु तत्सूत्र-भाष्यकर्ता सङ्कर्षः अथवा सङ्कर्षणः इति प्रपञ्चहृदयग्रन्थस्य हृदयम्। प्रामाणि-कतया परैः कैश्चित् प्रदर्शितप्रपञ्चहृदयग्रन्थस्यायमपूर्वो महिमा——यत् देवता-काण्डघटितविंशतिलक्षणीभाष्यकृत् तत्रैव पूर्वं बोधायनः तद्भिन्नः उपवर्षश्च निर्दिष्टः। देवस्वामिभवदासावपि देवताकाण्डान्तभागद्वयव्याख्यातारौ पूर्वं निर्दिष्टौ। तस्मिन्नेव ग्रन्थे उपरि काण्डत्रयप्रमेयनिरूपणावसरे देवताकाण्ड-प्रमेयमित्थं निरूपितम्——'देवताकाण्डस्य प्रथमाध्याये सर्वेषां मन्त्रविशेषाणां देवतातत्वप्रदर्शने तात्पर्यमिति प्रदर्शितम्। द्वितीयाध्याये विध्यर्थवादनामधेयानां (विध्यर्थवादादेः) मन्त्रदेवताविशेषत्वम्। तृतीयाध्याये देवतातत्वं स्वेच्छया विग्रहवत्त्वादिगुणगणालङ्कृतम्। चतुर्थाध्याये देवता, तत्फलं सत् (सर्व) कर्मणामपवर्गाधिकारिणः तादात्म्यलक्षणमपवर्गफलमिति' इति।

तत्वटीकायां वेङ्कटनाथेन यदुक्तं 'सङ्कर्षकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवतैव स्वरूपभेदगुणप्रकर्षैः निरकृष्यत' इति, यच्च तदनुसारिण्यां नयमयूखमालिकायां 'स्वरूपमादौ तद्भेदः तदुपासनपूर्वकम्। फलञ्च देवताकाण्डे देवतानान्तु कथ्यते॥' इत्युक्तं, प्रायशः तदनुसारेण देवताकाण्डप्रमेयं प्रपञ्चहृदये उपवर्णितम्। तदेतत् प्रमेयजातं विद्यमाने प्रसिद्धे जैमिनिकृते सङ्कर्षकाण्डे देवताकाण्डापराभिधे नैवास्तीति प्रत्यक्षमेव तद्ग्रन्थदर्शिनामिदानीमपि। एवञ्च विरुद्धबहुविधपाठभेदयुतं विरुद्धनानार्थबोधकञ्च प्रपञ्चहृदयाख्यं केनाप्यज्ञात-नामधेयेनाधुनिकेन कृतं ग्रन्थमवलम्ब्य देवताकाण्डनिर्णयः अत्यन्ताशक्य इति निश्चप्रचम्।

## (८६) आर्षवृत्तिभक्तानामपि परेषां आर्षवृत्तिखण्डनम्।

आर्षी बोधायनवृत्तिरनुसरणीया इति परो वदति। मीमांसापादुकायाञ्च वेङ्कटनाथेन——'विदुषां वृत्तिकारोऽनुवर्त्यः' इति, 'प्रख्यातो वृत्तिकारो मुनि-

रनृतमसौ व्याचकारेति मन्दम्' इति च कथितम्। आर्षवृत्तिभक्तिमता तेनैव सेश्वरमीमांसायां—'यत्तु उपवर्षवृत्तौ तस्य निमित्तपरीष्टिर्न कर्तव्येति नञमध्याहृत्यातिमहता क्लेशेन व्याख्यातं, तदप्यनेन निरस्तं, निमित्तपरीक्षाऽभावे प्रत्यवायस्य दर्शितत्वात्' इति उपवर्षवृत्तिः खण्ड्यते। 'अतो भगवानप्युपवर्षोऽपरीक्षणीयत्वपूर्वपक्षमन्वारुरोह' इति बहिर्मधुरवचोविन्यासेन खण्डनं न कृतवानिव चाभिनयति। अहो महामायित्वं वेङ्कटनाथस्य। अस्माभिः पूर्वं यदुक्तं—वेङ्कटनाथः उपवर्षवृत्तिखण्डक इति वक्ष्यत इति, तदत्रोक्तं वेदितव्यम्।

'भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति' इत्यस्मिन् अधिकरणे श्रुतप्रकाशिकायां—'ज्यायस्त्वशब्दश्रवणात् व्यस्तोपासनपक्षोऽपि सूत्रकाराभिमत इति चेन्न, वाक्यभेदादिप्रसङ्गात्। ज्यायस्त्वशब्दस्तु प्रामाणिकत्वाभिप्रायेणाप्युपपन्नः' इति, 'रामानुजभाष्ये ज्यायस्त्वं प्रामाणिकत्वमित्यर्थः' इति च वृत्तिकारमतखण्डनं कृतम्। भगवत्पादभाष्येऽपि वृत्तिकारमतमेतत् खण्डितम्। कोऽयं वृत्तिकारः? वृत्तिकारमतानुसारी वृत्तिकारभक्तः पर एव प्रष्टव्यः।

### (८७) वृत्तिग्रन्था बहवः तत्र सांप्रदायिकानां पुरस्कारः असांप्रदायिकानां निरासश्च भगवत्पादैः शबरस्वामिभिश्च कृतः।

भगवत्पादैरपि न सर्वो वृत्तिग्रन्थो दूष्यते। 'एक आत्मनश्शरीरे भावा'दित्यधिकरणे—'अत एव भगवतोपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः' इति, देवताधिकरणे—'वर्णा एव तु शब्द इति भगवानुपवर्षः' इति च वृत्तिकारस्य उपवर्षस्य पुरस्करणात्। 'एतस्मादेव आकृष्य तत्रात्मास्तित्वमुक्तमित्यत्र वृत्तिकारवचनं गमकमित्याह—अत इति।' इति व्याचक्षाणेनानन्दगिरिणा उपवर्षः वृत्तिकार इत्युक्तम्। 'आचार्यसंप्रदायोक्तिपूर्वकं सिद्धान्तमाह वर्णा इति' इत्यानन्दगिरीये उपवर्षः आचार्यः, तत्सम्प्रदायः भगवत्पादैरङ्गीकृत इत्युक्तम्। तैत्तिरीयोपनिषद्भाष्यारम्भे भगवत्पादैः 'यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः। व्याख्यातास्सर्ववेदान्तास्तान्नित्यं

प्रणतोऽस्म्यहम् ॥' इति उपनिषद्व्याख्यातारो वृत्तिकारास्सर्वेऽपि पूर्वाचार्याः नमस्कृता एव।

गीताभाष्यारम्भे भगवत्पादैरुक्तं—'तदिदं गीताशास्त्रं समस्तवेदार्थसारसङ्ग्रहभूतं दुर्विज्ञेयार्थं तदर्थाविष्करणाय अनेकैः विवृतपदपदार्थवाक्यार्थन्यायमपि अत्यन्तविरुद्धानेकार्थत्वेन लौकिकैः गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरणं करिष्यामि' इति। तत्रानन्दगिरीये 'गीताशास्त्रार्थस्य प्रकटीकरणार्थं पदविभागः तदर्थोक्तिः समासद्वारा वाक्यार्थनिर्देशः तत्रापेक्षितो न्यायश्चाक्षेपसमाधानलक्षणः वृत्तिकारैर्दर्शितः, तथापि तथाविधमेव शास्त्रं शास्त्रपरिचयशून्यैः समुच्चयासमुच्चयवादिभिः विरुद्धार्थत्वेनानेकार्थत्वेन च गृहीतमालक्ष्य तद्बुद्धिमनुरोद्धुमिदमारब्धव्यमित्यर्थः' इति व्याख्यातम्। अनेन वृत्तिकारोक्तार्थेषु लौकिकानां विरुद्धवदवभासमानेषु तत्वनिर्णयार्थं भगवत्पादैर्भाष्यमारब्धमित्युक्तम्।

अत्र च भाष्ये वृत्तिकारा अपि अनेके इति कथितम्। पञ्चपादिकायामपि—'तथाच वृत्त्यन्तरे वर्णितम्' 'अन्यैरपि स्ववृत्तौ वर्णितम्' 'वृत्त्यन्तरे तु शेषलक्षणा षष्ठी व्याख्याता' इति कथितत्वेन वृत्तिकाराः अनेके आसन्निति स्फुटीकृतम्। आनन्दगिर्याचार्यैरपि 'वृत्तिकाराभीष्टचतुर्थीसमासनिरासेन षष्ठीसमासमाह' इति, 'वृत्त्यन्तरे शेषे षष्ठी व्याख्याता, तत्राह' इति च वृत्तिकारबहुत्वं सूचितम्। पूर्वमीमांसायामपि तृतीयचतुर्थे वार्तिककारैः—'अतः परं षट्सूत्राणि भाष्यकारेण न लिखितानि, वृत्त्यन्तरकारैस्तु सर्वैः व्याख्यातानि। तत्र कैश्चित् त्रीण्यधिकरणानि कल्पितानि। अपरैश्चत्वारि' इति वदद्भिः बहवो वृत्तिकारा आसन्निति कथितम्।

तत्र च केचित् सत्संप्रदायानुरोधिनः, केचित् तथा न भवन्ति। अत एव भगवत्पादैः केचित् निरस्यन्ते, केचित् पुरस्क्रियन्ते इति ज्ञायते। पूर्वमीमांसायामपि भवदासादयः केचित् वृत्तिकाराः शबरस्वामिना निरस्यन्ते,

उपवर्षादयः परे वृत्तिकाराः 'भगवानुपवर्ष' इति, 'अत्रभगवानाचार्य' इति च पुरस्क्रियन्ते। परस्परविरुद्धार्थभाषिषु पूर्वाचार्येषु सर्वेऽपि पुरस्करणीया इति वक्तुं न शक्यते। भगवत्पादैरपि पूर्वाचार्यसत्संप्रदायमनुरुन्धानैरेव प्रस्थानत्रय-भाष्यमारचितम्। न परैरिव स्वकपोलकल्पितसंप्रदायानुरोधेन भाष्यमारचितम्। भगवत्पादैरेव हि उक्तं गीताभाष्ये—'असंप्रदायवित् सर्वशास्त्रविदपि मूर्खवदेवोपेक्षणीयः' इति। 'गुरुसंप्रदायरहितानां सम्यग्ज्ञाननिष्ठा दुस्साध्या' इति च। संप्रदायविदां उपवर्षसुन्दरपाण्ड्यब्रह्मनन्दिद्रविडाचार्यगौडपादप्रभृतीनां उक्तयः बहुत्र भगवत्पादैः प्रमाणीक्रियन्ते। 'वेदान्तार्थगहनसंप्रदायहीन' इत्येव भास्कराचार्यः पञ्चपादिकाविवरणादिषु तिरस्क्रियते।

भगवत्पादैः उपवर्षादिप्राचीनवृत्तिकारानुरोधेन सूत्रभाष्यमारचितमिति शारीरकमीमांसाभाष्यवार्तिके तद्विवरणे च अभिनवद्रविडाचार्यैरप्युक्तम्। इमानि तद्वचनानि जन्माद्यधिकरणस्थानि—

'इदं सूत्रं प्राचा परिकलितवृत्त्या प्रथमतः
स्वतन्त्रं व्याख्याय श्रुतिविवृतितामुक्तवपुषा।
पदाहत्या रीत्याऽक्षचरणमतं नेति यतिराट्
स्फुटं प्रत्याख्याय श्रुतिविवरणात्मेत्यकथयत्॥'

अत्र विवरणम्—'प्राचा-उपवर्षादिना प्राचीनेन व्याख्यात्रा। परिकलित-वृत्त्या-परिगृहीतव्याख्यया। इह त्रिविधं भाष्यम्—प्रथमं प्राचीनवृत्तिकारमताभिप्रायेण सूत्रमिदं लोकसिद्धलक्षणपरमिति। द्वितीयं पुनरिदं सूत्रं न्यायमतरीत्या ईश्वरानुमानपरमिति पक्षनिराकरणपरम्। तृतीयन्तु 'यतो वा इमानि' इत्यादि-श्रुतेः विवरणपरं सूत्रमिदमिति।'

'यतीन्द्राणां सम्राट् सरसवचनैर्वर्णकमथो
पुराणानां पूर्वं स्वमतिविभवेनापरमपि।

15

विधाय द्वौ न्यायांशुभिरभिनिबद्धौ विधुरवी
धुनोति स्म ध्वान्तं ननु सुमनसां मानसगतम् ॥ '

अत्र विवरणम्—'पुराणानां—उपवर्षादीनां, वर्णकं—जन्मादिसूत्रव्याख्यानम् । आचार्यैरग्रे जन्मादिसूत्रं श्रुतिव्याख्यापरमिति वर्णकान्तरस्य वक्ष्यमाणत्वात्, प्रथमं सूत्रमिदं केवललक्षणपरं भवतीति योजनपरं भाष्यं उपवर्षादिवृत्तिकारकृत-योजनानुकरणपरम् । यथा उपवर्षप्रभृतिवृत्तिकृतां लेखनपंक्तिः तथैव सा पंक्तिः इह पठिता' इति ॥

## (८८) बोधायनवृत्तेः पराभिमतायाः भगवत्पादसमयादनन्तर-कालिकत्वम् ।

भगवत्पादेभ्यः प्राचीनेषु बहुषु वृत्तिकारेषु मध्ये बोधायनोऽपि कश्चित वृत्तिकारः स्यात्, तस्य च संप्रदायः सत्संप्रदायः, तमवलंब्यैव च विशिष्टाद्वैतिभिः रामानुजादिभिः भाष्यादिकमारचितम्, इति वक्तुं शक्यत्वात् बोधायनवृत्तिरेव शशशृङ्गायमाणेति किमिति उच्यत इति चेदत्रोच्यते—बोधायनः भगवत्पादैः खण्डितो वा न वा, इति वक्तव्यम् । यदि भगवत्पादप्रदर्शिताद्वैतमतानुसारी बोधायनः स्यात्, तदा सः न भगवत्पादैः खण्डितेषु वृत्तिकारेष्वन्तर्गतः स्यात् । तेन च भगवत्पादमतानुसारिणा बोधायनेन समाश्रितेन परेषां न किञ्चित् प्रयोजनम् । यदि च भगवत्पादमताननुसारी पराभिमतविशिष्टाद्वैतसिद्धान्त-प्रवर्तकः बोधायनस्स्यात्, तदा स नियतं भगवत्पादैः खण्ड्येत । तदखण्डने भगवत्पादीयाद्वैतमतप्रतिष्ठाया असंभवप्रसंगात् । न च विशिष्टाद्वैतानुसारी वृत्तिकारः कश्चित् भगवत्पादैः खण्डितः भाष्यादिग्रन्थेषु । प्रस्पष्टभेदवादिनः सर्वे दूषिताः । ब्रह्मपरिणामवादिनः भेदाभेदवादिनो ये वृत्तिकाराः ते च सर्वेपि भगवत्पादैर्दूषिता एव । विशिष्टाद्वैतसिद्धान्तावलम्बिनस्तु न ब्रह्मपरिणामवादि-नः, न च भेदाभेदवादिनः । इदं च तैरेवोद्घुष्यते । अपि तु प्रच्छन्नभेदवादिनः ब्रह्मजीवजगतां शरीरशरीरिभावाभ्युपगमेन सर्वं निर्वहन्ति । एतादृशं विशिष्टा-

द्वैतमेव सूत्रार्थमभ्युपगच्छन्तो वृत्तिकारा आचार्यैर्विशिष्य न खण्डिताः, पूर्वं तादृशवृत्तिकाराणामसत्त्वादेव। भेदखण्डनेन भगवत्पादैः खण्डितप्राया एव ते पश्चात्तनैरद्वैतिभिः सम्यक् खण्डिताः। विशिष्टाद्वैतिभिः भगवत्पादखण्डितभेदाभेदवादिवृत्तिकारवैलक्षण्येन नूतनं स्वीयविशिष्टाद्वैतानुसारिणं कञ्चित् वृत्तिकारं प्रकल्प्य, तस्य बोधायननामत्वं महर्षित्वं भगवत्पादात्प्राचीनत्वं सत्संप्रदायावलंबित्वमित्यादि च उद्घुष्य, स्वमतस्थापनाय प्रयत्यते, इत्येतत् सर्वं सर्वैरपि सम्यक् ज्ञायत एव। केचन विचारकौशलवर्जिताः तदज्ञात्वा नवीनं विशिष्टाद्वैतमार्गं प्राचीनत्वेन श्राभ्यन्तु नाम। तन्मते प्रविशन्तु च नाम। तावता नास्माकं काचित् क्षतिः। वस्तुतत्वमीदृशं परस्यापि स्वहृदयसाक्षिकमस्माभिरुद्घाट्यते। नास्मासु असूयितव्यम्।

### (८९) श्रीवत्साङ्कमिश्रवृत्तेरेव बोधायनवृत्तित्वारोपः श्रीवत्साङ्कमिश्रस्य च नाथमुनिशिष्यत्वोहः।

बोधायनमहर्षिकृता ब्रह्मसूत्रवृत्तिरिति योद्घुष्यते परैः, सा यामुनेनाननूदिता इति पूर्वमेवोक्तम्। या तु तेनानूदिता श्रीवत्साङ्कमिश्रकृता ब्रह्मसूत्रवृत्तिः, सैव आर्षत्वकल्पनाभिनिवेशिभिः परैः बोधायनवृत्तित्वेन घोषिता इति चोक्तम्। बोधायनवृत्तित्वेन परैः घोषिता च श्रीवत्साङ्कमिश्रवृत्तिः नाथमुनिकृतन्यायतत्वनामकग्रन्थमूला इति तर्क्यते। न द्रमिडभाष्यमूला। द्रमिडभाष्यस्य श्रीवत्साङ्कमिश्रवृत्तेश्च कस्यापि संबन्धस्याभावात्। नाथो हि यामुनस्य पितामहः प्राचार्यगुरुश्च 'नाथोपज्ञं मतं नः' इति तत्वमुक्ताकलापे वेङ्कटनाथेन स्वीयविशिष्टाद्वैतसंप्रदायस्य आद्यप्रवर्तकत्वेन कीर्तितः। 'न्यायतत्वशास्त्रप्रकरणं ह्यात्मसिद्धिः' इति न्यायसिद्धाञ्जने वेङ्कटनाथोक्त्या यामुनाचार्यग्रन्थानां मूलभूतं न्यायतत्वं नाथप्रणीतमिति ज्ञायते। किं बहुना, परेषां सर्वोऽपि ग्रन्थः न्यायतत्वमूलक एव।

भगवन्नाथमुनिमिश्राः इति भगवच्छब्दमुनिशब्दमिश्रशब्दबहुवचनसाहित्येनैव वेङ्कटनाथः विशिष्टाद्वैतमूलगुरुं नाथं कीर्तयति। अन्यांस्तु निरुप-

पदेनैव एकवचनान्तेन तत्तन्नाम्ना व्यवहरति। सर्वार्थसिद्धौ च एवं न्यायतत्वग्रन्थं पुरस्करोति वेङ्कटनाथः—'उक्तं खलु नाथमुनिभिः वेदान्तानुकूलं न्यायशास्त्रं न्यायतत्वाभिधानम्। तच्च परिगृहीतं यामुनाचार्यादिभिः। ननु आर्षं परित्यज्य कथं मानुषं परिगृह्यते? युक्त एव मानुषस्याप्युपपन्नस्य परिग्रहः। आर्षस्याप्यनुपपन्नस्य परित्यागः। अन्यथा लोकायतस्यापि परिग्रहः स्यादित्याह—नार्षत्वादि प्रधानं क्वचिदपीति' इति। अहो आर्षग्रन्थेषु अनितरसाधारणी भक्तिः परेषाम्। 'परमर्षिप्रणीतानि व्याख्येयानि, तेषाञ्च महर्षिप्रणीतानि व्याख्यानानि सन्ति चेत् तान्येवानुरोद्धव्यानि। न हि अनृषेस्सूक्ष्मदर्शित्वम्। ऋषेरभिप्रायं ऋषिरेव च स्वतो वेदितुमर्हति। न जडमतिरितरो जनः' इति च वदन्तः परे स्वेषामृषिभक्तिं परामभिनयन्ति। अहो परेषामसाधारणी चातुरी।

नाथे च पितामहे स्वप्राचार्यगुरौ विशिष्टाद्वैतमूलपुरुषे असाधारणी भक्तिः यामुनस्य। अत एव स्वीये स्तोत्ररत्ने नाथमेव श्लोकत्रयेण पुरस्करोति। अन्ते च 'अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिमात्मवन्तम्। पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा ॥' इति च भगवन्तं प्रार्थयति। नाथस्य सर्ववेदान्तसिद्धान्तानामिदंप्रथमतया उपदेष्टारं परमगुरुं द्रविडप्रबन्धकर्तारं वकुलाभरणशठकोपादिनामभिः प्रसिद्धं तुरीयाचार्यं विशेषतः महीकरोति स्तोत्ररत्ने यामुनः—'माता पिता युवतयस्तनया विभूतिस्सर्वं यदेव नियमेन मदन्वयानाम्। आद्यस्य नः कुलपतेर्वकुलाभिरामं श्रीमत्तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना ॥' इति।

'नाथोपज्ञं मत'मिति सङ्कल्पसूर्योदये तत्वमुक्ताकलापे च वेङ्कटनाथो वदति। वकुलाभरणं द्राविडप्रबन्धमुखेन नाथस्यापि सर्ववेदान्तसिद्धान्तोपदेष्टारं आद्यं कुलपतिं निर्दिशन् यामुनः शठकोपोपज्ञं स्वीयं मतं वदति। शठकोपोपज्ञस्यापि सतः स्वीयमतस्य वेङ्कटनाथेन नाथोपज्ञत्वकीर्तनन्तु, द्रविडप्रबन्धैरेव शठकोपेन मततत्वमाविष्कृतं न संस्कृतप्रबन्धैः, नाथस्तु न्यायतत्वाभिध-

संस्कृतप्रबन्धमुखेन विशिष्टाद्वैतमततत्वं बोधितवानिति भावेन इति वेदितव्यं सहृदयैः।

एवञ्च नाथात् प्राचीनः कोऽपि विशिष्टाद्वैतसिद्धान्तमूलभूतसंस्कृतग्रन्थकर्ता नास्त्येव इति स्फुटमेव तत्वम्। तस्मात् यामुनकीर्तितः श्रीवत्साङ्कमिश्रः वृत्तिकारः नाथशिष्येष्वन्यतम इति निर्धार्यते। अत एव 'गम्भीरन्यायसागरभाषिणा भगवता श्रीवत्साङ्कमिश्रेणे'ति आत्मसिद्धौ सबहुमानं नाथभक्तेनापि यामुनेन कीर्त्यते। तस्य द्रमिडभाष्यमूलकत्वं परं आरोप्यते यामुनेन स्वसिद्धान्तस्य प्राचीनत्वाविष्करणाय। रामानुजादिभिस्तु पौर्वापर्यविपर्ययकृद्भिः तद्वृत्तेः द्रमिडभाष्यमूलभूतत्वं प्राचीनबोधायनमहर्षिकृतत्वञ्चारोप्यते स्वीयसिद्धान्तस्यातिप्राचीनत्वाविष्करणाय इति निश्चप्रचम्।

## (९०) यामुनाचार्यग्रन्थगतस्य द्रमिडभाष्यकृत्पदस्य शठकोप एवार्थः न द्रविडाचार्यः इति संभावना।

अत्रेदमवधेयं वस्तुतत्वं सहृदयैः—आत्मसिद्धौ 'द्रमिडभाष्यकृता' इति यामुनाचार्यनिर्दिष्टः न द्रविडाचार्यः, अपितु द्रविडभाषामयसहस्रसंख्याकप्रबन्धकर्ता शठकोप इति संभाव्यते। अत एव द्रविडाचार्येण इत्यनिर्दिश्य द्रमिडभाष्यकृता इति निर्दिशति यामुनः। शठकोपप्रबन्धं द्रमिडोपनिषदित्येव उद्घोषयति वेङ्कटनाथः। 'वकुलधरमहर्षिदृष्टविश्वजनीनोपनिष'दिति वेङ्कटनाथो निक्षेपरक्षायां, 'समस्तभागवतसार्थसंगृहीतवकुलधरमहर्षिदृष्टद्रमिडागम' इति सच्चरित्ररक्षायां च सभक्तिश्रद्धमाह। तत्पूर्वतनो यामुनस्तु शठकोपभक्तोपि सन् उपनिषदिति उद्घोषणमतिप्रसङ्गादनुचितं मन्वानः उपनिषदर्थाविष्कारकाणां ब्रह्मसूत्राणां तात्पर्यव्याख्यानरूपतया ब्रह्मसूत्रभाष्यरूपतां द्रविडभाषामयशठकोपप्रबन्धस्य वेदान्तरहस्यवैशद्यातिशयहेतुभूतोपबृम्हणरूपतया स्वीयैरभिमतस्य आकलयन्, पदशः प्रतीकोपादानपूर्वकं कात्स्न्येन ब्रह्मसूत्राणां व्याख्यानमकृत्वा तत्तात्पर्यमात्रस्य गंभीरतया विवरणरूपतां च तस्य प्रबन्धस्यालोचयन्,

आत्मसिद्धौ—'यद्यपि भगवता बादरायणेन इदमर्थान्येव सूत्राणि प्रणीतानि, विवृतानि च तानि परिमितगंभीरभाषिणा द्रमिडभाष्यकृता' इत्याह। अन्यथा ब्रह्मसूत्रोपरि स्वातंत्र्येण द्रविडाचार्यैर्भाष्याकरणात् वितथवादी स्याद्यामुनाचार्य इति सहृदया एव आलोचयन्तु।

अत एव यामुनाचार्यः द्रविडाचार्यवाक्यं किंचिदपि नोवाच स्वीयग्रन्थे। शठकोपकृतद्रमिडभाष्यरूपप्रबन्धगतवाक्यन्तु भाषान्तरसंबन्धित्वात् संस्कृतभाषामयस्वीयग्रन्थे नोक्तवानिति तु युज्यत एव। 'आद्यस्य नः कुलपते'रिति स्तोत्रे गोत्रर्षिवदसावित्यभिप्रायेण कुलपतिशब्देन शठकोपं पुरस्कुर्वन् यामुनः 'परिमितगंभीरभाषिणा द्रमिडभाष्यकृता' इति वाक्येन शठकोपं वदतीति तु अत्यन्तमेव युज्यते। नाथरूपगुरुद्वारा शठकोपप्रबन्धतत्त्वार्थाभिज्ञः तच्छिष्यः श्रीवत्साङ्कमिश्रस्तु ब्रह्मसूत्राणां शठकोपकृतद्रमिडभाष्यमुखेन तात्पर्यार्थं जानन् संस्कृतभाषया विस्तृतां ब्रह्मसूत्रवृत्तिं रचयामास। सा च वृत्तिः यामुनेन 'विस्तृतानि च तानि गंभीरन्यायसागरभाषिणा भगवता श्रीवत्साङ्कमिश्रेणापि' इत्यनूद्यते। तस्याश्च वृत्तेः शठकोपीयद्रमिडभाष्यमूलकत्वं युज्यत एव।

यामुनग्रन्थगतस्य 'द्रमिडभाष्यकृता' इति पदस्य पूर्वोक्तवास्तविकार्थापरिज्ञानेन द्रविडाचार्यार्थकत्वभ्रान्त्या च यामुनात् पराचीनाः रामानुजादयः द्रविडाचार्यस्यापि अद्वैताचार्यमूर्धन्यस्य विशिष्टाद्वैतमतसंबन्धं, तत्पूर्वतनस्य द्रविडाचार्यव्याख्येयवाक्यनामकमूलग्रन्थकर्तुः यामुनाचार्येणापरिगृहीतस्य ब्रह्मनन्दिनश्चाद्वैताचार्यस्य विशिष्टाद्वैतमतसंबन्धं आरोपयन्तः, तदीयग्रन्थेषु च विशिष्टाद्वैतमतसूचकं किञ्चिदपि वाक्यमपश्यन्तः परमं परिश्रमं प्राप्नुवन्तीति रामानुजादिग्रन्थदर्शिनां स्पष्टतरं प्रतीयेत। अहो अत्याश्चर्यम्। वस्तुतत्वं कथं वर्तते, कथं लोके अन्यथाज्ञानं प्रचयं गतमिति विमृशतामस्माकं महामायाया अघटितघटनापटीयस्त्वं प्रत्यक्षमनुभूयते। 'वकुलधरमहर्षेश्च श्रुतिस्मृत्याद्युपबृंहणप्रवृत्तत्वात्' इति सच्चरित्ररक्षायां वेङ्कटनाथोक्तिं परिपश्यतां

शठकोपः श्रुतिस्मृत्याद्यर्थनिर्णायकब्रह्मसूत्रार्थविवरणाय द्राविडप्रबन्धं प्रणीतवानिति असंदिग्धं स्फुरेदिति, तदीयप्रबन्धस्यैव द्रमिडभाष्यमिति नाम इति, शठकोपस्यैव च यामुनोक्तं द्रमिडभाष्यकृदिति नामेत्यत्र च मनागपि नाक्षेपावकाशः ।

'द्विकाभ्यां द्व्यष्टाङ्घ्रिर्दुरधिगमनीतिस्थपुटिता
यदन्त्या मीमांसा श्रुतिशिखरतत्त्वं व्यवृणुत ।
तदादौ गाथाभिर्मुनिरधिकविंशाभिरिह नः
कृती सारग्राहं व्यतरदिह संगृह्य कृपया ॥'

इति परकीयाभियुक्तश्लोकोऽपि शठकोपस्साक्षादेव द्रमिडभाष्यकारः परिमितगंभीरभाषी यामुनोक्तः ब्रह्मसूत्रविवरणकृत् इति असंदिग्धं आवेदयतीति तत्वदृष्टयः परिशीलयन्तु ॥

## (९१) वेङ्कटनाथकृतोपदेशस्य स्वानुष्ठानपूर्वकत्वम् ।

वेङ्कटनाथो हि शतदूषण्यां चतुष्षष्टितमे यतिलिङ्गभेदभङ्गवादे परमार्थपरमहंसपरिव्राजकान् अद्वैतिनः प्रति कञ्चन उपदेशं करोति—'यच्च त्यागार्थं (यज्ञोपवीतशिखात्यागार्थं) व्यासादिवचनमिति कैश्चित्पठ्यते, तदपि तत्तत्कोशेषु न पश्यामः । न चोदाहरन्ति पूर्वे निरूपकाः । न च प्रत्यक्षश्रुतिविरोधे वैदिकपरिगृहीतबहुस्मृतिविरोधे च अप्रसिद्धस्मृतिमात्रस्य जीवितमस्ति, लब्धजीवितत्वेपि आन्यपर्यमलेपकमतभङ्गे प्रपञ्चयिष्यते, अतः तद्वचनकारिषु व्यासादिसमाख्यां सङ्केतेन प्रक्षिप्य धर्मसूनुरिव सत्यवादी भव' इति । अत्र व्यासभिन्नेन केनचित् कृतत्वेन स्वाभिमते वचनविशेषे व्यासस्मृतावनुपलब्धतया च स्वाभिमते, व्यासवचनमिदमिति उक्तिं तद्वचनकारिणि व्यास इति समाख्यां सङ्केतेन कृत्वा यथार्थां कुरु, यथा धर्मसूनुः 'अश्वत्थामा हतः' इत्युक्तिं अश्वत्थामनामककुञ्जरहननेन यथार्थामकरोत्, इत्युपदिश्यते ।

वेङ्कटनाथः स्वयं स्वीयैश्चानुष्ठितमेवार्थं उपदिशति परान् प्रति । यतः बोधायननामकमहर्षिणा वस्तुतः अकृतेऽपि वृत्तिग्रन्थे, जगत्यां विदितेऽपि च

तत्त्वे, स्वसिद्धान्तावलम्बियामुनोक्तवृत्तिग्रन्थविशेषकर्तरि श्रीवत्साङ्कमिश्रे वा, अन्यस्मिन् यस्मिन् कस्मिंश्चिद्वा रामानुजभाष्योक्तवाक्यसप्तककर्तरि बोधायन इत्याख्यां रामानुजार्यादारभ्य ऐकमत्येन सङ्केतेन प्रक्षिप्य धर्मसूनुवदेव सत्यवादिभिः परैः भूयते, बोधायनवृत्तिमूलकः रामानुजभाष्यसंमतविशिष्टाद्वैतमार्गः इति पटहप्रताडनं कुर्वद्भिः। स्वयमनुष्ठितत्वादेव किल धैर्येण परान्प्रत्यप्युपदिशति वेङ्कटनाथः। वेङ्कटनाथीयं यतिलिङ्गभेदभङ्गालेपकमतभङ्गाख्यवादद्वयमस्माभिरेव ग्रन्थान्तरे शतदूषणीशातनाभिधे शकलशश्शातितम्। तत एवानुसन्धेयम्। एवञ्च यानि वृत्तिग्रन्थवाक्यानि सप्त सप्तसु स्थलेषु रामानुजभाष्ये निर्दिष्टानि, तानि नाथशिष्यश्रीवत्साङ्कमिश्रकृतवृत्तिग्रन्थस्थान्येवेति न तद्विरोधः परिहरणीयोऽस्माकमिति सुधियो विदांकुर्वन्तु।

## (९२) परकीयवृत्तिग्रन्थः भास्करभाष्यानुकारेण भास्कराचार्यात् पश्चात् प्रवृत्तः।

भास्करभाष्ये हि 'अथशब्दः आनन्तर्यार्थ इह गृह्यते। तत्र किमपि पूर्ववृत्तं वक्तव्यम्। तदुच्यते—पूर्वं कर्मविचारो वृत्तः, अनन्तरं ब्रह्मजिज्ञासा आरभ्यते' इति, 'तस्मात् पूर्ववृत्तात् धर्मज्ञानादनन्तरं ब्रह्मजिज्ञासेति युक्तम्' इति चोक्तम्। बोधायनत्वाभिमतनाथशिष्यश्रीवत्साङ्कमिश्रकृतवृत्तावपि, ज्ञानपदस्थाने अधिगमपदं जिज्ञासापदस्थाने विविदिषापदञ्च घटयित्वा भास्करभाष्यपङ्क्तिरेव 'वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा' इत्यनूद्यते, भास्करोक्तार्थः सत्संप्रदायागतः प्राचीनस्स्यादिति भ्रमेण। यत्तु शतदूषण्यां अष्टमे वादे, 'तथा च वृत्तिकारः—'वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा' इति। अयञ्च पक्षो भास्करैरप्यङ्गीकृतः' इत्युक्तम्, तत्र भास्करोक्त एवायमर्थः श्रीवत्साङ्कमिश्रेण बोधायननाम्ना व्यवहृतेनानूदित इति अवगन्तव्यम्। अत्र एकाभिप्रायत्वेन भास्करैरिति बहुवचनान्तशब्देन वेङ्कटनाथः भास्करीयान् प्रलोभयति।

भास्करेणापि भगवत्पादप्रद्वेषिणा ‘नन्विह कर्मावबोधानन्तर्यं विशेषः’ इति भगवत्पादभाष्ये आशङ्क्य निरस्तोऽर्थः साम्प्रदायिकः प्राचीनस्स्यादिति भ्रान्त्यैव स्वग्रन्थे निबद्धः।

(९३) वस्तुतः नाथमुनिरेव यामुनोक्तश्रीवत्सांकमिश्र इति संभावना।

वस्तुतस्तु यामुनग्रन्थे श्रीवत्सांकमिश्र इति योऽयं गंभीरन्यायसागरभाषी भगवान् द्रमिडभाष्यविस्तृतव्याख्याता कथितः, सः यामुनपितामहः तत्प्राचार्यः यामुननितान्ताभिमानपात्रं नाथमुनिरेवेति तर्कयामः। तदीयविस्तृतव्याख्या च न्यायतत्वमिति प्रसिद्धो यामुनग्रन्थानामपि मूलभूतो नाथमुनिप्रणीतो ग्रन्थ एव। ‘न्यायतत्वशास्त्रप्रकरणं ह्यात्मसिद्धिः’ इति वेङ्कटनाथेनापि यो वर्णितः, स एव आत्मसिद्धौ तत्प्रकरणग्रन्थे यामुनेन कीर्तयितुमुचितश्च। अत एव यामुनः तं गंभीरन्यायसागरभाषी भगवान् इति सबहुमानं वदति इति श्लिष्यते च। श्रीरङ्गनाथमिश्रेण इत्येव यामुनेनोक्तं स्यात्। प्रमादेन श्रीवत्सांकमिश्रेण इति लिखितं लेखकैः। नाथस्य च रङ्गनाथ इत्येव पूर्णं नाम। सत्यभामा भामा इतिवत् रङ्गनाथः नाथ इति व्यवह्रियते। एवंच यामुनग्रन्थे श्रीवत्सांकपदद्वयं न भवेत्। कश्चित् परिग्राह्यः अन्यः परित्याज्यः इति टिप्पणीकारक्लेशोऽपि न स्यात्। परमते प्रसिद्धनाथकृतग्रन्थं विहाय अप्रसिद्धश्रीवत्सांकग्रन्थकल्पनक्लेशोऽपि न भविष्यति। तत्वापरामर्शेनैव च सर्वैः अन्यथा अन्यथा च व्यवह्रियते। शठकोपमुख्यशिष्यः नाथमुनिः तदीयद्रमिडभाष्यविस्तृतव्याख्याता इति वर्णने सुतरामौचिती च भविष्यतीति तत्वं सर्वे परिशीलयन्तु।

(९४) परमार्थतः ब्रह्मसूत्रविवरणं न शठकोपग्रन्थः अपि तु स्वतन्त्रः।

परमार्थतस्तु शठकोपग्रन्थोऽपि द्रमिडभाष्यमिति प्रसिद्धः न ब्रह्मसूत्रसंक्षेपात्मा, अपि तु स्वतन्त्र एव। अत एव उभयमीमांसा इतिवत् उभयवेदान्त

इति परकीयप्रसिद्धिः पार्थक्यं प्रकाशयति। परे तु भिन्नयोः मीमांसयोः ऐकशास्त्र्य-मिव भिन्नयोः संस्कृतद्राविडवेदान्तयोः एकप्रबन्धत्वमपि वक्तुमभिलषन्ति।

'लक्ष्मीनाथाख्यसिंधोश्शठरिपुजलदः प्राप्य कारुण्यनीरं
नाथाद्रावभ्यषिंचत्तदनु रघुवरांभोजचक्षुर्झराभ्याम्।
गत्वाऽदो यामुनाख्यां सरितमथ यतीन्द्राख्यपद्माकरेन्द्रं
संप्राप्य प्राणिसस्ये प्रवहति नितरां देशिकेन्द्रश्रमौघैः॥'

इति परकीयाभियुक्तश्लोकोऽपि शठकोपप्रबन्धस्य स्वातन्त्र्यरूपं इममर्थं पोषयति। अत एव च—

'अस्मद्देशिकमस्मदीयपरमाचार्यानशेषान् गुरून्
श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णौ मुनिं यामुनम्।
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणं
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये॥'

इति परकीयगुरुपरंपरानुसंधानश्लोकेऽपि ब्रह्मसूत्रप्रणेतृव्यासादीनामप्रवेशः। (1) नारायणः (2) लक्ष्मीः (3) विष्वक्सेनः (4) शठकोपः (5) नाथमुनिः (6) पुण्डरीकाक्षमुनिः (7) श्रीराममिश्रः (8) यामुनाचार्यः (9) महापूर्णः (10) रामानुजमुनिः इत्येव हि परकीयगुरुपरंपरा। यामुनाचार्यस्तु स्वीयमति-वैभवेन, स्वसमयात् पूर्वं पार्थक्येन व्यवहृतयोरपि उभयवेदान्तयोः मिश्रणं कुर्वन्, शठकोपकृतो द्रमिडभाषामयो ग्रन्थः ब्रह्मसूत्रभाष्यरूपः अत एव तस्य द्रमिड-भाष्यमिति संज्ञा, शठकोपस्य च द्रमिडभाष्यकार इति नाम इति आत्मसिद्धि-नामके स्वीयप्रकरणग्रन्थे सूचयन् उभयवेदान्तसन्धिमापादयामास। परे सर्वेऽपि तदनुसारेण इदानीमपि उभयवेदान्तपारगविरुदं दधत इति बोध्यम्।

## (९५) परकीयवृत्तिकारोक्तवाक्यसप्तकसमालोचनम्।

परकीयवृत्तिकारेण च 'कर्माधिगमादनन्तरं ब्रह्मविविदिषे'ति स्वकीय-प्रथमवाक्योक्तार्थसिद्ध्यर्थमेव 'संहितमेतत् शारीरकं जैमिनीयेन षोडशलक्षणे-

नेति शास्त्रैकत्वसिद्धिः' इति द्वितीयवाक्यं लिखितम्। अस्मत्सिद्धान्तेऽपि कर्मब्रह्मविचारशास्त्रयोरैकशास्त्र्यमभ्युपगम्यते, न तावता विरोधः, भगवत्पादभाष्यभामतीटीकयोरपि प्रौढ्या ऐकशास्त्र्यमभ्युपगतमेव। वेदार्थविचारत्वोपाधिकस्य्यस्य ऐकशास्त्र्यस्याभ्युपगमेऽपि च, न कर्मविचारानन्तर्यस्य ब्रह्मविचारे प्रसक्तिः, भगवत्पादभाष्योक्तरीत्या ब्रह्मविचारे कर्मानुष्ठानस्यापेक्षानियमाभावेन तदप्रसक्तेः इति परिमले व्यक्तम्। 'संहितमेत'दित्यादिद्वितीयवृत्तिकारवाक्यनिर्देशावसरे 'रामानुजभाष्ये, वक्ष्यतीति भविष्यन्निर्देशः व्याख्यास्यमानप्रदेशान्तरविषयतया' इति तत्वटीकायामुक्तं, तच्च प्रदेशान्तरं किमिति तु न निर्दिष्टम्। कुत्र प्रदेशे वृत्तिकारो वक्ष्यति? को वा तद्वेद? वृत्तिग्रन्थसत्त्वे किल तत् वेदितुं शक्यं, तदेव गगनकुसुमम्।

शारीरकपदं यत् परैर्विव्रियते—'जगच्छरीरकः परमात्मा शारीरः, तं कायति प्रतिपादयतीति शारीरकं बादरायणप्रणीतं शास्त्रम्। कै गै शब्दे इति हि धातुः' इति, तत्तु सूत्रकृतोऽनभिमतम्। 'अनुपपत्तेस्तु न शारीरः' 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'प्रतिषेधादिति चेन्न शारीरात्' इति सूत्रैः सूत्रकारः शारीरं जीवं व्यपदिशति, न परमात्मानम्। अतः सूत्रकारदृष्ट्या शारीरकस्य जीवस्य ब्रह्मत्वमीमांसैव शारीरकं शास्त्रं व्यपदिश्यते।

'जगद्व्यापारवर्जं समानो ज्योतिषा' इति तृतीयं वृत्तिकारवाक्यमपि सगुणमुक्तस्य ब्रह्मसाम्यमभ्युपगच्छतामस्माकं न प्रतिकूलम्। सूत्रव्याख्यानान्तररूपाणि तदीयवृत्तिकारवाक्यानि शिष्टानि चत्वारि परकीयानि असांप्रदायिकत्वात् त्याज्यानि। नाथमुन्युपज्ञार्थानुवादकानि हि तानि। को वा प्राचीनसंप्रदायानुसारी तमर्थं विश्वसेत्।

## (९६) विशिष्टाद्वैतमतस्य नवीनत्वं वेङ्कटनाथ एव वदति।

वेङ्कटनाथेनैव स्पष्टमभ्युपगतं विशिष्टाद्वैतमतस्य नवीनत्वं यतिराजसप्ततौ—'यतिक्ष्माभृद्दृष्टं मतमिह नवीनं तदपि किम्' इति। सङ्कल्पसूर्योदयेऽपि

'नवीनमेतत् भवतो मतमिति' इति ग्रन्थेन विशिष्टाद्वैतमतस्य नवीनत्वमाशङ्क्य 'प्रत्येतव्यं तदर्थ्यं पटुतरमतिभिः प्राक्तनं नूतनं वा। किञ्च, तदात्वे नूतनं सर्वमायत्याञ्च पुरातनम्। न दोषायैतदुभयं न गुणाय च कल्पते॥' इत्युक्त्या समाहितं, शङ्कितं नवीनत्वं न प्रतिक्षिप्तं, बोधायनादिभिः प्रवर्तितत्वेन प्राचीनत्वं नोक्तम्। 'नाथोपज्ञं मतं नः' इति चोक्तं तेनैव।

इयता प्रबन्धेन निर्णीतोऽयमर्थः—यत् पराभिमतबोधायनवृत्तिरप्रामाणिकत्वात् असत्त्वाच्च न विरोधिनी। द्रमिडभाष्यकारः वाक्यकारश्च अद्वैतसिद्धान्तावलम्बिनौ प्राचीनाचार्यौ। न परसंप्रदायमूलप्रवर्तकौ। अतस्तयोरपि नाद्वैतसिद्धान्तविरोधित्वम्, इति।

## (९७) ब्रह्मनन्दिद्रविडाचार्यौ न विशिष्टाद्वैतसंप्रदायप्रवर्तकौ इति सुदर्शनस्याप्यभिमतम्।

ब्रह्मनन्दिद्रविडाचार्यौ वाक्यकारभाष्यकारौ वस्तुतः विशिष्टाद्वैतसंप्रदायस्य न मूलभूतौ। तदीयग्रन्थेषु विशिष्टाद्वैतसंप्रदायमूलभूतस्य असाधारणस्य विषयस्य कस्याप्यनुपलम्भात्, इति आत्मसाक्षिकं तत्त्वं मत्वैव श्रुतप्रकाशिकाकारेण 'अथवा यथार्थं सर्वविज्ञानमिति वेदविदां मत'मिति रामानुजभाष्यव्याख्यानसमये 'अथ वक्ष्यमाणाया यथार्थख्यातेः स्वसिद्धान्तत्वं दर्शयति—अथवेति। तस्यास्सांप्रदायिकत्वं दर्शयन् तां प्रतिजानीते—यथार्थमिति। वेदविदां—भगवद्बोधायननाथमुनिमिश्रादीनामित्यर्थः' इति कथितम्।

अत्र स्वीयसंप्रदायप्रवर्तकमध्ये प्रथमं बोधायनं निर्दिश्य, अनन्तरं ब्रह्मनन्दिद्रमिडाचार्यावनुक्त्वैव, यामुनाचार्यकथितं श्रीवत्साङ्कमिश्रमप्यनुक्त्वैव नाथमुनिमुक्तवान् सुदर्शनः। अनेन ज्ञायते सुदर्शनहृदि ब्रह्मनन्दिद्रमिडाचार्यौ वस्तुतः स्वीयसंप्रदायप्रवर्तकौ न भवतः इति भावः निगूढः स्फुटं वर्तत इति। श्रीवत्साङ्कमिश्रस्थाने अभिषिक्तः बोधायन इति हेतोः श्रीवत्साङ्कमिश्रस्यानुक्तिः। अथवा नाथशिष्यकोटिप्रविष्टस्य श्रीवत्साङ्कमिश्रस्य यामुनोक्तस्य नाथमुनि-

मिश्रादीनामित्यादिपदेन यामुनवत् ग्रहणस्याभिप्रेतत्वात्तस्यानुक्तिस्संभाव्यते। तदा स्वीयैः स्वेन च कल्पितो बोधायनः श्रीवत्साङ्कमिश्रस्थानानभिषिक्तः स्वतन्त्रः प्रथमो विशिष्टाद्वैताचार्यः स्वीयैः स्वेन च निक्षिप्तं सर्वमपि भारं वोढुमेवावतीर्णत्वात् यथार्थख्यातिपक्षमपि वोढुं समर्थ इति भावेन भगवद्बोधायनेति प्रथममुक्तं सुदर्शनेन।

यथार्थख्यातिपक्षः केन वचनेन बोधायनेनोक्त इति तु न प्रदर्शितं रामानुजसुदर्शनाभ्यां मूलकारटीकाकाराभ्यां विशिष्टाद्वैतस्थापकाचार्याभ्याम्। बोधायनस्य वाक्यसप्तकं विना किं वा वाक्यं प्रदर्शयितुं शक्येत। विद्यमानत्वे किल प्रदर्शयितुं शक्यं, अथ वा वाक्यसप्तकवत् कल्पयित्वा प्रदर्शयितुमुचितम्। केन वा कारणेन यथार्थख्यातिपक्षबोधकं बोधायनवाक्यं न प्रदर्शितमिति तावेव प्रष्टव्यौ। नाथग्रन्थश्रीवत्साङ्कमिश्रग्रन्थयामुनग्रन्थादिमूलकाः रामानुजसुदर्शनवेङ्कटनाथादिग्रन्थाश्च मतान्तरत्वात् नास्माकमादरार्हा इति तद्विरोधः नास्माकं परिहरणीय इति च सिद्धम्। वस्तुतः पूर्वमस्माभिः (९३) अङ्कितविषयनिरूपणप्रकरणोक्तरीत्या श्रीवत्सांकमिश्र इति कश्चनाचार्यो नास्ति नाथमुनिरेव यामुनोक्तः इति संभावितत्वेनैव सुदर्शनेन श्रीवत्सांकमिश्रो न निर्दिष्टः नाथमुनिरेव च निर्दिष्टः इत्यवगन्तव्यं सहृदयैः। अन्यथा श्रीवत्सांकमिश्र इति कश्चिदाचार्यो यदि स्यात्, यामुनोक्तः स कुतः न निर्दिष्टः सुदर्शनेन? 'भगवद्बोधायननाथमुनिराममिश्रादीनाम्' इति पाठान्तरेऽपि श्रीवत्सांको न निर्दिष्ट एव॥

## (९८) व्यासपूजाकाले परमहंसैः द्रविडाचार्यस्य पूज्यत्वम्।

द्रविडाचार्यविषये अवश्यवक्तव्यं किञ्चिदवशिष्यते, तदुक्त्वा, निबन्धं परिसमापयामः। प्रतिहायनं आषाढपूर्णिमायां व्यासपूजा अद्वैतिभिः परमहंसपरिव्राजकैः क्रियत इति सुप्रसिद्धं सर्वेषामपि आस्तिकानाम्। तत्र कृष्णादिपञ्चकं, व्यासादिपञ्चकं, आचार्यपञ्चकं, सनकादिपञ्चकं, शुकनारदौ, द्रविडादिपञ्चकं,

पञ्चकं, गुरुपञ्चकं, गणपत्यादिदेवताचतुष्टयं, दिक्पालाष्टकम्, ब्रह्मा, शेषः, मध्ये शुद्धचैतन्यं, इति सप्तचत्वारिंशद्देवताः पूज्यन्ते। द्रविडादिपञ्चके मध्ये द्रविडाचार्याः चतुर्दिक्षु क्रमेण गौडपादाचार्याः, गोविन्दभगवत्पादाचार्याः, संक्षेपशारीरकाचार्याः, विवरणाचार्याश्च पूज्यन्ते इति स्थितिः। एवं च द्रविडाचार्याणां अद्वैताचार्यत्वादेव अद्वैतिपरमहंसपरिव्राजकैः पूज्यत्वमित्यवधेयम्।

कृष्णादिपञ्चके वासुदेवादिचतुर्व्यूहसहितस्य भगवतः कृष्णस्य, व्यासादिपञ्चके पैलादिशिष्यचतुष्टयसहितस्य भगवतो व्यासस्य, आचार्यपञ्चके पद्मपादादिशिष्यचतुष्टयसहितस्य भगवतः श्रीशङ्कराचार्यस्य, सनकादिपञ्चके सनन्दनसनातनसनत्कुमारसनत्सुजातसहितस्य भगवतः सनकस्य अन्तर्भावः। गुरुपञ्चके गुरुः, परमगुरुः, परमेष्ठिगुरुः, परात्परगुरुः, अन्ये ब्रह्मविद्यासंप्रदायकर्तार आचार्याः, इति पञ्चानामन्तर्भावः। गणपतिः, दुर्गा, क्षेत्रपालकः, सरस्वती, इति गणपत्यादिचतुष्टयम्। एवं व्यासपूजाकाले अद्वैतिभिः पूज्यमानानां मध्ये प्रविष्टस्य भगवतो द्रविडाचार्यस्य अद्वैताचार्यत्वे न कस्याप्याक्षेपो भवितुमर्हति। स्वीयाचार्यत्वेन घोषयन्तः परे द्रविडाचार्यान् पूजयन्तीति न शृणुमः।

अस्मिन् द्रविडात्रेयदर्शनाभिधे निबन्धे एतावत्पर्यन्तमुपपादितप्रकारेण द्रविडाचार्याणां वाक्यकारब्रह्मनन्दिनां च अद्वैतसिद्धान्तप्रवर्तकपूर्वाचार्यत्वनिर्धारणात्, तेषां च छान्दोग्यवाक्यभाष्यकृत्त्वेन ब्रह्मसूत्रव्याख्यातृत्वाभावात्, ब्रह्मसूत्रोपरि बोधायनवृत्तेः गगनकुसुमायितत्वात्, 'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः (ब्रह्मनन्दिद्रविडाचार्यादयः) संचिक्षिपुः, तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति रामानुजोक्तेर्बाधितार्थकत्वं भवति, अतः अबाधितार्थकत्वाय तद्वाक्यस्थाने एवं पठितव्यम्—'भगवन्नाथमुनिकृतां (न्यायतत्वाभिधां) विस्तीर्णां ब्रह्मसूत्रवृत्तिं (द्रविडभाषामयगाथामुखेन शठकोपोपदिष्टब्रह्मसूत्रार्थबोधकव्याख्यां) पूर्वाचार्याः (यामुनमहापूर्णादयः) संचिक्षिपुः (सिद्धित्रयागमप्रामाण्यादिग्रन्थमुखेन उपदेशमुखेन च) तन्मतानु-

सारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति। इत्थं कथन एव तत्वार्थकथनं स्यात्। अन्यथा हि परप्रतारणार्थत्वं वाक्यस्यापद्येत।

अयं चास्मदुक्तवाक्यप्रकारः रामानुजार्येणैव सूच्यते। वेदान्तदीपाभिधे ग्रन्थे एवं रामानुजार्येण उपक्रान्तम्—

'प्रणम्य शिरसाऽऽचार्यांस्तदादिष्टेन वर्त्मना।
ब्रह्मसूत्रपदान्तस्स्थवेदान्तार्थः प्रकाश्यते ॥' इति।

श्लोकस्य चायमर्थ उन्नीयते—आचार्यान्—महापूर्णादीन्। शिरसा प्रणम्य। तदादिष्टेन वर्त्मना—शठकोपनाथपुण्डरीकाक्षराममिश्रयामुनद्वारा आगतान् अस्मदुपदिष्टान् द्रमिडभाषामयवेदान्तप्रतिपाद्यानर्थान् बुद्धिकौशलेन संस्कृतभाषामयवेदान्तारूढान् कृत्वा उभयवेदान्तसामरस्यं कुरु। अयमेव यामुनाचार्यस्यास्मद्गुरोरन्त्यसमये हृदि स्थितोऽर्थः भवदुपदेशार्थमस्मदुपनीतः, इत्याज्ञप्तेन मार्गेण। ब्रह्मसूत्रपदान्तस्स्थवेदान्तार्थः—ब्रह्मसूत्रपदारूढसंस्कृत-वेदान्तार्थः, प्रकाश्यते—मया वेदान्तसारभाष्यवेदान्तदीपग्रन्थमुखेन प्रकटी-क्रियते। इति। शठकोपप्रणीतद्राविडप्रबन्धोपवर्णितान् रामानुजार्येण स्वीय-भाष्ये गुरुनिदेशानुसारेण ब्रह्मसूत्रतदन्तस्स्थसंस्कृतवेदान्तारूढतया प्रकाशिता-नेवार्थान् द्राविडप्रबन्धव्याख्यानेषु सर्वेष्वपि व्याख्यातारः पश्चात् भाषाद्वयमेलनेन निवेशितवन्तः। तदनुसारेणैव च इदानीन्तना उभयवेदान्तिनस्सर्वेऽपि मणि-प्रवालभाषया संस्कृतद्राविडोभयविधभाषापदघटितवाग्गुम्भैः तत्वत्रयमाविष्कुर्वन्ति।

## (९९) अद्वैतसंप्रदायप्रवर्तकपूर्वाचार्यवन्दनं अद्वैतदर्शनस्य सर्वोपास्यत्वं च।

छान्दोग्योपनिषद्वाक्यग्रन्थकर्तॄन्नुमो वयम्।
अद्वैतनिष्ठानाचार्यानात्रेयब्रह्मनन्दिनः ॥ १ ॥

'आत्रेयवाक्यमपि संव्यवहारमात्र'मिति संक्षेपशारीरके ब्रह्मनन्दिनां आत्रेयत्वमुक्तम्।

छान्दोग्योपनिषद्वाक्यभाष्यकर्तॄन् स्तुमो वयम् ।
अद्वैतभावानाचार्यान् द्रविडाचार्यसंज्ञितान् ॥ २ ॥

द्रविडाचार्याणां 'द्रविडोऽपि च तत्त्वमसीति वचः' इति तोटकाचार्यपद्ये द्रविड इति देशनाम्नैव व्यवहारः, गौडपादाचार्याणां गौड इति व्यवहारवत् । नानयोराचार्ययोर्नामान्तरं प्रसिद्धम् ।

शारीरकमीमांसाभाष्यवार्तिके सविवरणे उपक्रमे अभिनवद्रविडाचार्या एवमाहुः—

'परिव्राजामाद्याः परमगुरवश्शङ्करयतेः
प्रणेतारः प्रौढं गहनतरमाण्डूक्यविवृतेः ।
परानन्दाभोगे पटुतरहृदो गौडचरणाः
पुरस्तान्नः स्फूर्तिं विदधतु चिदानन्दमधुराम् ॥' इति ।

अत्र विवरणम्—'नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च । व्यासं शुकं गौडपदं यतीन्द्रं गोविन्दयोगीन्द्रमपि स्मरामि ॥' इति संप्रदायवित्कारिकारीत्या ब्रह्मविद्यायां श्रीशुकशिष्याः, परिव्राजामाद्याः—एतद्युगे प्रथमयतयः । गौडचरणाः—कुरुक्षेत्रदेशगत'हिररावती' नदीतीरभवगौडजातिश्रेष्ठाः देशविशेषभवजातिनाम्नैव प्रसिद्धाः । द्वापरयुगमारभ्यैव समाधिनिष्ठत्वेन आधुनिकैः जनैः अपरिज्ञातविशेषाभिधानाः सामान्यनाम्नैव लोकविख्याताः' इति । एतद्रीत्या द्रविडाचार्याणामपि देशनाम्नैव प्रसिद्धिः । एतेऽपि द्वापरान्ते एतद्युगप्रारंभे एव अभूवन् इति परेऽपि प्राहुः—संप्रदायपरिशुद्धिनामके द्रविडभाषामयप्रबन्धे वेङ्कटनाथः एवं वदति—'व्यासबोधायनादिगळाले (களாலே) यथाधिकारं प्रवर्तितमान (மான) वेदान्तसंप्रदायत्तिर्कु (த்திற்கு) इन्द (இந்த) युगारंभत्तिले (த்திலே) ब्रह्मनन्दयादिकलुक्कुप्पिन्बु (களுக்குப்பின்பு) नम्माळ्वार् (நம்மாழ்வார்) प्रवर्तकरानार् (ரானார்)' इति । एवं च एककाल एव गौडाचार्याः द्रविडाचार्याश्च देशनाम्नैव

जनैर्मिथो भेदेन व्यवहृताः आसन् इति ज्ञायते । वेङ्कटनाथः द्रविडाचार्यान् स्वीयसंप्रदायप्रवर्तकाचार्यान्मत्वा यदाह तत् पूर्वमेव निरस्तं, द्रविडाचार्यकाल-विषये तदुक्तिरपि प्रमाणतया उदाहृता इति वेदितव्यम् ॥

आत्रेयान् द्रविडांश्चैव भगवत्पादसंज्ञितान् ।
ध्यायामश्शङ्कराचार्यान् अद्वैतस्थापकान् भुवि ॥ ३ ॥

भगवत्पादानां 'तं वन्देऽत्रिकुलप्रसूतममलं वेधोऽभिधं मद्गुरुम्' इति बृहदारण्यकवार्तिके, 'एवं गौडैर्द्राविडैर्नः पूज्यैरर्थः प्रभाषितः' इति नैष्कर्म्यसिद्धौ च सुरेश्वराचार्योक्त्या आत्रेयत्वं द्रविडत्वं चावगम्यते ॥

शिवे च भगवत्पादे भक्तानप्पय्यदीक्षितान् ।
नमामो द्रविडान् ग्रन्थैरद्वैतामृतवर्षकान् ॥ ४ ॥

रसगंगाधरे जगन्नाथभट्टेन द्रविडपुङ्गव इति उक्त्या अप्पय्यदीक्षितानां द्रविडत्वं बोध्यम् ।

द्रविडत्रयमात्रेयत्रयं गौडत्रयं वयम् ।
अद्वैतबोधसिद्ध्यर्थं नमामः करणैस्त्रिभिः ॥ ५ ॥

दत्तात्रेयः ब्रह्मनन्दी भगवत्पादः इति अद्वैताचार्यात्रेयत्रयम् । द्रविडाचार्यः भगवत्पादः अप्पय्यदीक्षितः इति अद्वैताचार्यद्रविडत्रयम् । गौडपादः सुरेश्वरः गौडब्रह्मानन्दः इति अद्वैताचार्यगौडत्रयम् ।

अद्वैतदर्शनं भुवि गौडद्रविडाखिलद्विजैस्सेव्यम् ।
द्रविडादिद्रविडान्तं प्रथितं गौडादिगौडान्तम् ॥ ६ ॥

गौडादिगौडान्तं अद्वैतदर्शनमिति प्रसिद्धिः, गौडपादकारिकाप्रभृतिभिः गौडब्रह्मानन्दीयान्तैः ग्रन्थैरद्वैतस्थापनात् । तद्वदेव द्रविडादिद्रविडान्तमद्वैतदर्शन-मित्यपि प्रसिद्धिः, द्रविडाचार्यकृतछान्दोग्योपनिषद्वाक्यभाष्यप्रभृतिभिः द्रविड-पुङ्गवाप्पय्यदीक्षितकृतपरिमलान्तैः ग्रन्थैरद्वैतस्थापनात्, इति सुविदितमेवाद्वैति-

नाम् । सिद्धान्तबिन्दुग्रन्थगतवेदान्तशास्त्रपदं शारीरकमीमांसारूपचतुरध्यायी-तद्भाष्यतदीयटीकावाचस्पत्यतदीयटीकाकल्पतरुतदीयटीकापरिमलरूपग्रन्थपञ्चकार्थ-कतया व्याचक्षाणैः गौडब्रह्मानन्दसरस्वतीभिः अद्वैतदर्शनस्य द्रविडान्तत्वमाविष्कृतम् ॥

### (१००) भगवत्पादीयभाष्यस्य निःश्रेयसकामैरुपास्यत्वं ग्रन्थोपसंहारश्च ।

ईदृशमहिमोपेतं चेदमद्वैतदर्शनमौपनिषदं अनाद्यविच्छिन्नसत्संप्रदाय-परंपरागतं विशुद्धविज्ञानैश्शुचिहृदयैश्शुद्धवैदिकैर्भगवत्पादैः संसारतापतप्ताखिल-प्राणिसमुज्जीवनाय श्रुतिसूत्रस्मृतिप्रस्थानत्रयभाष्यमुखेन जगति प्रतिष्ठापितम् । तत्र च भगवत्पादाः प्रथमतः उपनिषद्भाष्यं, ततः ब्रह्मसूत्रभाष्यं, ततो गीता-भाष्यं च प्राणैषुरिति प्रसिद्धिः। समुचिता चेयम्, यतः उपनिषद्भाष्यं पदभाष्य-मिति परिमले व्यवहृतम् । पदशः उपनिषद्विवरणरूपत्वाच्च तस्य तथा व्यवहारः । अर्थाच्च सूत्रभाष्यस्य उपनिषद्वाक्यतात्पर्यविवरणरूपत्वाद्वाक्यभाष्यमिति व्यव-हारस्सूचितः । पदभाष्यानन्तर्यञ्च वाक्यभाष्यस्य युज्यत एव । अत एव च उपनिषद्भाष्यपठनानन्तरमेव सूत्रभाष्यं पठ्यते सांप्रदायिकैः । पूर्वमुपनिषद्भाष्य-मपठितवतः अशीलितोपनिषदश्छात्रान् उपक्रमोपसंहारादिभिरुपनिषत्तात्पर्य-निर्णायकं सूत्रभाष्यं पाठयतामाचार्याणां परमः परिश्रमः ।

'अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते। यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः' इति अध्यासभाष्यसमाप्तिस्थवाक्येन पूर्वमध्यासभाष्ये अस्मा-भिस्सूचितः इतःपूर्वमेव उपनिषद्भाष्यमुखेन च विवृतो योऽयमर्थः स एव सर्वेषां उपनिषत्पदाभिधेयानां वेदान्तानामर्थ इति अस्यां शारीरकमीमांसायां तात्पर्यनिर्णायकन्यायप्रदर्शनमुखेन प्रदर्शयिष्यामः इति ब्रुवाणा हि भगवत्पादाः उपनिषद्भाष्यस्य सूत्रभाष्यात्पूर्वप्रणीतत्वं संसूचयन्तीव ।

उपनिषद्भाष्येषु च मध्ये प्रथमं तैत्तिरीयोपनिषद्भाष्यमेव भगवत्पादैः प्रणीतमित्यपि प्रसिद्धिरस्ति। अत एव तत्रोपक्रमे 'यस्माज्जातं जगत्सर्वं यस्मिन्नेव प्रलीयते। येनेदं धार्यते चैव तस्मै ज्ञानात्मने नमः ॥' इति जन्माद्यधिकरणनिर्धारिततटस्थस्वरूपलक्षणलक्षितं ब्रह्म नमस्कृतं भगवत्पादैः। पश्चाच्च 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥' इति श्रुतिमवलंब्य, 'यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः। व्याख्यातास्सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम् ॥' इति संप्रदायेन उपनिषद्व्याख्यातॄन् पूर्वाचार्यान् प्रणमन्ति भगवत्पादाः। इमे सर्ववेदान्ता इत्युक्त्या च स्वव्याख्येयत्वेन बुद्धिसन्निहितानां सर्वेषां वेदान्तानां निर्देशात् तैत्तिरीयोपनिषद्भाष्यमेव प्रथमं क्रियत इति सम्यक् सूचयन्ति। तत्र च देवतागुरुवन्दनरूपस्य मंगलस्यारचितत्वादेव प्रायशः उपनिषद्भाष्यान्तरेषु सूत्रभाष्ये च पृथक् मंगलं न रचयामासुः, वेदान्तपदवाक्यभाष्यरूपस्य सर्वस्य एकग्रन्थत्वात्, आदौ च मंगलस्य कृतत्वात्। सूत्रभाष्योपक्रमे च 'अथातो ब्रह्मजिज्ञासे'ति माङ्गलिकाथशब्दघटितसूत्रानुसंधानपूर्वकमेव भाष्यस्य रचितत्वादपि मंगलं प्रणीतमेवेत्यपि वदन्ति प्रामाणिकाः।

'युष्मदस्म'दित्यादि 'तद्धर्माणामपि सुतरामितरेतरभावानुपपत्ति'रित्यन्तमेव भाष्यं, (मङ्गलाचरणम्) अस्य चायमर्थः—सर्वोपप्लवरहितः विज्ञानघनः प्रत्यगर्थ इति' इति पञ्चपादिकां, 'अत्र चाध्यासाभाववर्णनाय विशुद्धात्मदेवतातत्वानुस्मरणात् परममिदं मङ्गलम्' इत्यर्थकं विवरणं, 'सर्वोपप्लवेति युष्मदित्यस्य व्याख्या, विज्ञानघन इत्यनेन अस्मदिति व्याख्यातम्, अतद्व्यावृत्त्यैव तन्निरूपणमिति दर्शयितुं आदौ युष्मच्छब्दप्रयोगः' इति विवरणव्याख्यानमृजुविवरणं, 'युष्मदर्थादनात्मनो निष्कृष्य शुद्धस्य चिद्धातोः अध्यारोपापवादन्यायेन ग्रहणं द्योतयितुं आदौ युष्मद्ग्रहणम्' इत्यानन्दगिरीयं, 'इदमस्मत्प्रत्ययगोचरयोरिति वक्तव्ये युष्मद्ग्रहणमत्यन्तभेदोपलक्षणार्थम्' इति भामतीं च परामृशतां परमार्थतः

इदमर्थभूतानात्मात्मकसर्वोपप्लवसंबन्धरहितमस्मत्पदलक्ष्यार्थभूतविज्ञानघनप्रत्यगर्थ-मादौ स्मरन्तो भगवत्पादाः सूत्रभाष्योपक्रमे परममङ्गलमाचरितवन्त इत्यत्र संशयलेशस्याप्यनवसरः। भगवत्पादीयसूत्रभाष्ये युष्मदस्मदित्यत्र युष्मदर्थानु-संधानस्यैव प्राथम्यात् मङ्गलाचरणं प्रति सन्दिहानो वेङ्कटनाथः, 'अखिलहेय-प्रत्यनीकनिखिलकल्याणगुणाकरो भगवान् वासुदेव' इति भगवदनुसन्धान-स्थलेऽपि हेयस्यैव प्रथमानुसंधानान्न मङ्गलाचरणं संपद्येतेति प्रतिवक्तव्यः। यदि तत्र हेयस्य निषेध्यतयाऽनुसन्धानान्न दोष इति मनुषे, तर्हि अत्रापि युष्मदर्थस्या-नात्मनः आत्मासंबन्धप्रतिपिपादयिषयैवानुसंधानमिति मन्येथाः।

इदमर्थकयुष्मच्छब्दघटितं युष्मदस्मदित्यादिभाष्यवाक्यं परामृशतां 'सकलमिदमहं च वासुदेवः' इत्यादिभगवदनुसंधानवाक्यं भगवद्व्यतिरेकेण प्रपञ्चाभावं प्रत्यगात्मनो भगवदभेदं च बोधयत् स्मृतिपथमारोहति। तत्रापि इदमर्थानुसंधानमेव प्रथमं भवति इति न तत् मङ्गलं भवतीति किं ब्रूयाद्वेङ्कटनाथः। अनालोच्यैव यत्किंचिदसंबद्धं वदतः किमुत्तरं देयम्।

युष्मदस्मदित्यत्र मध्यलघुत्वेन वन्हिदैवत्यस्य रगणस्यादौ निवेशान्मङ्ग-लानुपपत्तिमाशंकमानः वेङ्कटनाथः गणनियमाः तत्संबन्धिनो गुणदोषाश्च क्षुद्रका-व्येष्वेव अवेक्षणीया नान्यत्रेति प्रतिवक्तव्यः। अन्यथा 'अग्न आयाहि वीतये' 'अग्निमीले पुरोहितम्' इत्यादिवेदे का गतिः? श्रीमद्रामायणारंभकश्लोके 'मा निषाद प्रतिष्ठां त्वं' इत्यादौ च का गतिः? तस्मात्—अग्न आयाह्यग्निमीले मा निषादेतिवत् परम्। युष्मदस्मदिति ज्ञेयं मङ्गलं भाष्यकृत्कृतम्॥

किंच वेङ्कटनाथ एव 'न च पक्षिलादयः परमास्तिका निमित्ते सत्यपि मङ्गलं नाचरन्तीति सिद्धं भवति। अपि तु कृतस्यापि नमस्कारादेः मङ्गलस्य ग्रन्थनिवेशनमेव न कृतमिति व्याकुर्वते' इति तत्वटीकायां कथयति। तथा च अनुमानेन कथंचित् सगुणं ब्रह्म व्यवस्थापयद्भ्यः पक्षिलादिभ्योऽपि उपनिषद्भिः सगुणं निर्गुणं च द्विरूपं ब्रह्म सम्यक् व्यवस्थापयन्तः भगवत्पादाः परमास्तिका इति

कथं तैर्मङ्गलं नाचरितमिति संदेहो वेङ्कटनाथस्य श्रुतप्रकाशिकाकारस्य वा उदभूदिति पर्यालोचने चित्रीयते मनः। पूर्वं प्रदर्शितं तैत्तिरीयोपनिषद्भाष्यगतं मङ्गलं पश्यतः कस्य वा सचेतसो भवेदियमाशङ्का। न्यायवार्तिकतात्पर्यटीकायां वाचस्पतिमिश्रा एवमाहुः—'अविगीतशिष्टाचारपरंपराप्राप्तः परमशिष्टेन वार्तिककृता कृतोऽपीष्टदेवतानमस्कारः ग्रन्थे न निवेशितः। न खल्वन्यदपि मंगलं शास्त्रे निवेशितं, प्रसिद्धतरतया मंगलान्तरवत् शिष्या अवगमिष्यन्तीति सर्वमवदातम्' इति। 'मङ्गलान्तरं—दधिदूर्वादि' इति तात्पर्यपरिशुद्धिप्रकाशे वर्धमानः। एवं च पूर्वोक्ताशंका नास्तिकानामेव उदियात्। तस्मात् परमं मङ्गलं कृत्वा भाष्यग्रन्थं लोकोपकाराय कृतवतां भगवत्पादानां भाष्यं निःश्रेयसकामैरुपास्यमद्वैतानुभवश्च संपादनीयः, तेन परां च शान्तिमृच्छेत्। इति सर्वमवदातम्।

अद्वैतदर्शनं प्राचोर्द्रविडब्रह्मनन्दिनोः।
इति न्यरूपि ग्रन्थेऽस्मिन् द्रविडात्रेयदर्शने॥ ७॥

भगवत्पादाचार्यान् हृदि स्थितान् प्रेरकान् निबन्धस्य।
ध्यात्वा तदनुग्रहतस्समापितोऽयं मया निबन्धोऽद्य॥ ८॥

शिवरामलक्ष्म्यभिख्यां मातरमपि सुन्दरेश्वराभिख्यम्।
पितरं वारक्यान्वयजातं वन्देऽग्रजां विशालाक्षीम्॥ ९॥

सम्भूतस्सुन्दराख्याद्द्विजकुलतिलकात्पोलकाख्याग्रहारे
श्रीरामाख्यस्सुधीन्द्रो गुरुसमधिगतन्यायवेदान्ततत्वः।
भेजे यः कामकोटीगुरुवरकृपया शास्त्ररत्नाकराख्यां
तेने स ग्रन्थमेतं निरुपमभगवत्पादपादाब्जभक्तः॥ १०॥

षट्पञ्चाशदुपस्कृतपञ्चसहस्रेषु हायनेषु कलौ।
पूर्णेषु मन्मथाब्दे मकरमुपेयुषि रवौ कृतो ग्रन्थः॥ ११॥

श्रीकामकोटिपीठेशजगद्गुरुपदांबुजे ।
अर्पितो भक्तिनम्रेण ग्रन्थः श्रीरामशास्त्रिणा ॥ १२ ॥

श्रीशङ्कराचार्यपदाधिरोहपञ्चाशदब्दीपरिपूर्तिकाले ।
तत्स्मारिकैषा कृतिरर्पिता श्रीजगद्गुरोः पादपयोजयुग्मे ॥ १३ ॥

या साऽद्वैतसभाऽऽविरास नगरे श्रीकुंभघोणे पुरा
वर्षे मन्मथनाम्नि पण्डितवरैर्जुष्टाऽऽर्यमिश्रैरपि ।
तस्या वज्रमहोत्सवे गुरुवरश्रीसंनिधौ मन्मथे
वर्षे काञ्च्यभिधे पुरेऽर्पितमिमं ग्रन्थं बुधाः पश्यत ॥ १४ ॥

॥ श्रीमच्छङ्करभगवत्पादेभ्यो नमः ॥

॥ पोलकं शास्त्ररत्नाकर श्रीरामशास्त्रिप्रणीतं द्रविडात्रेयदर्शनं समाप्तम् ॥

---

॥ अद्वैतसंप्रदायप्रवर्तकाचार्यब्रह्मनन्दिने नमः ॥

॥ अद्वैतसंप्रदायप्रवर्तकद्रविडाचार्याय नमः ॥

॥ शुभं भूयात् ॥

## अनुबन्धः (१)

॥ श्रीः ॥

### छान्दोग्योपनिषद्वाक्यकारस्य आत्रेयस्य टङ्कापराभिधानस्य भगवतो ब्रह्मनन्दिनो वाक्यानि अद्वैतविशिष्टाद्वैतग्रन्थेषूदाहृतानि ।

(१) 'सिद्धं तु निवर्तकत्वात्' इति ब्रह्मनन्दिवाक्यं सूत्रात्मकं माण्डूक्योपनिषद्भाष्ये भगवत्पादैः, तदीयटीकायां, ज्ञानवासिष्ठव्याख्यायां, इष्टसिद्धौ, तद्विवरणे, पञ्चपादिकाविवरणे, तत्वदीपने, खण्डनटीकायां विद्यासागर्याम्, अन्यत्राप्यद्वैतग्रन्थेषु प्रायशस्सर्वेषूदाहृतम् ।

'परिणामस्तु स्यात्' 'नासतोऽनिष्पाद्यत्वात् प्रवृत्त्यानर्थक्यन्तु सत्त्वाविशेषात्' 'न संव्यवहारमात्रत्वात्' इति वाक्यत्रयं कल्पतरौ प्रकृत्यधिकरणे उदाहृतम् । भास्करभाष्ये—

(२) 'परिणामस्तु स्यात् दध्यादिवत्' इति वाक्यमुक्तम् ।

(३) 'नासत उत्पत्तिरनिष्पाद्यत्वात्'

(४) 'नापि सतः प्रवृत्त्यानर्थक्यात्'

(५) 'सत्त्वाविशेषात्'

(६) 'अभिव्यक्त्यर्थमिति चेन्न तस्या अपि सत्त्वात्'

(७) 'प्रवृत्तिनित्यत्वाच्च सदाऽभिव्यक्तिप्रसङ्गः'

(८) 'न संव्यवहारमात्रत्वात्' इति वाक्यषट्कं संक्षेपशारीरकटीकासु मधुसूदननृसिम्हाश्रमादिरचितासु उदाहृतम् ।

(९) 'युक्तं तद्गुणकोपासनात्' इति वाक्यं रामानुजभाष्ये वेदार्थसंग्रहे च उक्तम् । (श्री भा. पु.-८०) (वे. सं. पु-१८७)

(१०) 'हिरण्मयः पुरुषो दृश्यत इति प्राज्ञस्सर्वान्तरस्स्यात् लोककामेशोपदेशात् तथोदयात् पाप्मनाम्'

(११) 'स्या(त्त)द्रूपं कृतकमनुग्रहार्थं तच्चेतनाना (तच्चेतसा) मैश्वर्यात्'

(१२) 'रूपं वा(चा)तीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशात्' इति वाक्यत्रयं वेदार्थसंग्रहे, वेदान्तसारे च उदाहृतम्। (वे-सं-पु-३३१--३३२) अत्र वाकारस्थाने चकारः शोधितोऽस्माभिः।

(१३) 'हिरण्मय इति रूपसामान्याच्चन्द्रमुखवत्' इति वाक्यं वेदार्थसंग्रहे वेदान्तसारे च उक्तम्। (वे. सं. पु-३३३)

(१४) 'आदित्यक्षिसं वा श्रीमत्त्वात्' इति वाक्यं श्रुतप्रकाशिकायां तात्पर्यदीपिकायां च सुदर्शनेनानूदितम् (वे-सं-पु-३२६) 'तस्य यथा कप्यासं पुण्डरीकं एवमक्षिणी' इति श्रुतेः षडर्थाः वाक्यकारोक्ता इति श्रुतप्रकाशिकायां तात्पर्यदीपिकायां च सुदर्शनसूरिणा, ब्रह्मविद्याभरणकृता, शिवार्कमणिदीपिका-कृता च, उक्तम्।

(१५) 'तस्मिन् यदन्तरिति कामव्यपदेशः' इति वाक्यं (श्रीभा-पु- ३००) रामानुजभाष्ये वेदार्थसंग्रहे च उक्तम्। (वे-सं-पु-२३६)

(१६) 'आत्मेत्येव तु गृण्हीयात् सर्वस्य तन्निष्पत्तेः' इति वाक्यं रामानुजभाष्ये वेदार्थसंग्रहे च उक्तम्। (श्रीभा-पु-११६) (वे. सं.पु-२४४)

(१७) 'पाप्मानः कालजरामृत्युशोकादयस्संख्यातत्वात्' इति वाक्यं श्रुतप्रकाशिकायामुक्तम्।

रामानुजभाष्ये जिज्ञासाधिकरणे उदाहृतानि द्वादशवाक्यानि—

(१८) 'वेदनमुपासनं स्यात् तद्विषये श्रवणात्'

(१९) 'सकृत्प्रत्ययं कुर्यात् शब्दार्थस्य कृतत्वात् प्रयाजादिवत्'

(२०) 'सिद्धं तूपासनशब्दात्'

(२१) 'उपासनं स्यात् ध्रुवानुस्मृतिः दर्शनान्निर्वचनाच्च'

(२२) 'तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्च'

(२३) 'जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेकः'

(२४) 'विमोकः कामानभिष्वङ्गः'

(२५) 'आरंबणसंशीलनं पुनः पुनरभ्यासः'

(२६) 'पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया'

(२७) 'सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि'

(२८) 'देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः'

(२९) 'तद्विपर्ययजा तुष्टिरुद्धर्षः' (श्रीभा-पु-९-× १२)

(३०) 'ब्रह्मण्युपनिषण्णेत्युपनिषत् उपनिषण्णत्वाद्वोपनिषत्' इति वाक्यं श्रुतप्रकाशिकोक्तम्। (श्रीभा-श्रुत-पु-४)

आहत्य त्रिंशद्वाक्यानि, तत्र अष्टौ वाक्यानि अद्वैतग्रन्थेषु द्वाविंशतिवाक्यानि विशिष्टाद्वैतग्रन्थेषु च उदाहृतानि।

---

॥ श्रीः ॥

# अनुबन्धः (२)

## छान्दोग्योपनिषद्वाक्यभाष्यकारस्य भगवतो द्रविडाचार्यस्य वाक्यानि अद्वैतविशिष्टाद्वैतग्रन्थेषूदाहृतानि।

(१) व्याधसंवर्धितराजकुमारस्य व्याधजात्यभिमानिनः आप्तैः प्रतिबोधनाख्यायिका द्रविडाचार्योक्ता बृहदारण्यकोपनिषद्भाष्ये भगवत्पादैः, तदीयवार्तिके, तदुभयटीकायां, तोटकाचार्यकृतश्रुतिसारसमुद्धरणे, आपस्तंबधर्मसूत्रवृत्तावुज्ज्वलायां च अनूदिता।

(२) छान्दोग्योपनिषद्भाष्ये तृतीयाध्याये मधुविद्याविवरणे भगवत्पादैः 'अत्रोक्तः परिहार आचार्यैः' इत्यादिना द्रविडाचार्यवाक्यस्य अर्थतोऽनुकरणं कृतम्। तत्र आनन्दगिरीये 'यदा अमरावती शून्या स्यात् तदा हि तां प्रति पुरस्तादुदेतीति प्रयोगशून्यत्वात् वसूनां भोगान्तः । एवमुत्तरासां पुरीणां विनाशे द्विगुणकालेन रुद्रादीनां भोगच्युतिः' इति द्रविडाचार्यवाक्यमुदाहृतम्।

(३) छान्दोग्योपनिषद्भाष्य एव चतुर्थाध्याये संवर्गविद्यायां भगवत्पादैः 'तत्राहुराचार्याः—'हंसवचनश्रवणात् शुगेनमाविवेश, तेनासौ शुचा श्रुत्वा रैक्वस्य महिमानं आद्रवतीति ऋषिरात्मनः परोक्षज्ञतां दर्शयन् शूद्रेत्याहेति। शूद्रवद्वा धनेनैवैनं विद्याग्रहणाय उपजगाम, नच शुश्रूषया, न तु जात्यैव शूद्र इति' इति द्रविडाचार्यवाक्यमुदाहृतम्।

(४) सूत्रभाष्ये ज्योतिश्चरणाधिकरणे भगवत्पादैः 'य एतामेवं ब्रह्मोपनिषदं वेद' इत्यत्र हि वेदोपनिषदमिति व्याचक्षते' इति द्रविडाचार्य-व्याख्या अनूदिता।

(५) भामत्यां समन्वयाधिकरणे 'संहरणाद्वा संवरणाद्वा स्वात्मीभावाद्वा वायुस्संवर्गः' इति द्रविडाचार्यवाक्यमुक्तम्।

(६) 'अन्तर्गुणां प्रत्यग्गुणामेव भगवतीं परदेवतां भजते' इति द्रविडाचार्यवाक्यं संक्षेपशारीरकोक्त्या ऊह्यते। सिद्धान्तसिद्धाञ्जनेऽपि इदं वाक्यमुक्तम्।

(७) 'यद्यपि सच्चित्तो न निर्भुग्णदैवतं गुणगणं मनसाऽनुधावेत् तथाप्यन्तर्गुणामेव देवतां भजत इति तत्रापि सगुणैव देवता प्राप्यते' इति वाक्यं रामानुजभाष्ये वेदार्थसंग्रहे च उक्तम्। (श्रीभा-पु-८०) (वे-सं-पु-१८७) अत्र द्रविडाचार्यवाक्ये 'अन्तर्गुणां प्रत्यग्गुणामेव भगवतीं परदेवतां भजते' इति 'तत्र तद्गुणैव देवता प्राप्यते' इति च पाठः अस्माभिः शोधितः।

(८) 'अञ्जसैव विश्वसृजो रूपं तत्तु न चक्षुषा ग्राह्यं मनसा त्वकलुषेण साधनान्तरवता गृह्यते 'न चक्षुषा गृह्यते नापि वाचा' 'मनसा तु विशुद्धेन' इति श्रुतेः। न ह्यरूपाया देवताया रूपमुपदिश्यते। यथाभूतवादि हि शास्त्रम्। यथा 'माहारजनं वासः' 'वेदाहमेतं पुरुषं महान्तम्' 'आदित्यवर्णं तमसः परस्तात्' इति प्रकरणान्तरनिर्देशाच्च साक्षिणः' इति वाक्यं वेदार्थसंग्रहे (वे-सं-पु-३३२) वेदान्तसारे च उदाहृतम्। अत्र वेदान्तसारे 'न वा मायामात्रं अञ्जसैव विश्वसृजो रूपम्' इति अधिकतया पदानि योजितानि दुर्विदग्धैः।

(९) 'न मयडत्र विकारमादाय प्रयुज्यते अनारभ्यत्वादात्मनः' इति वाक्यं वेदार्थसंग्रहे वेदान्तसारे च उदाहृतम्। (वे-सं-पु-३३३)

(१०) 'फलसंविभक्तसया हि कर्मभिरात्मानं पिप्रीषन्तीति स प्रीतोऽलं फलायेति शास्त्रमर्यादा' इति वाक्यं वेदार्थसंग्रहे अनूदितम्। (वे-सं-पु-२९५)

(११) 'तस्याज्ञया धावति वायुः, नद्यस्स्रवन्ति, तेन च कृतसीमानो जलाशयाः समदा इव मेषविसर्पितं कुर्वन्ति' 'तत्संकल्पनिबन्धना हीमे लोकाः न च्यवन्ते, न स्फुटन्ते, स्वशासनानुवर्तिनं ज्ञात्वा कारुण्यात् स भगवाननुगृण्हाति वर्धयेत् तं तद्विद्वान् कर्मदक्षः' इति वाक्यं वेदार्थसंग्रहे उक्तम्। (वे-सं-पु-३०४.)

(१२) राजानुजभाष्ये भोक्त्रापत्त्यधिकरणे 'यथा लोके राजा प्रचुरदन्दशूके घोरे अनर्थसंकटेऽपि प्रदेशे वर्तमानो व्यजनाद्यवधूतदेहो दोषैर्न स्पृश्यते अभिप्रेतांश्च लोकान् परिपालयिष्यति भोगांश्च गन्धादीनविश्वजनोपभोग्यान् धारयति, तथाऽसौ लोकेश्वरो भ्रमत्स्वसामर्थ्यचामरो दोषैर्न स्पृश्यते रक्षति च लोकान् ब्रह्मलोकादीन् भोगांश्चाविश्वजनोपभोग्यान् धारयति' इति वाक्यमुक्तम्। (श्रीभा-पु-४१८.)

(१३) 'ऋणं हि वै जायते' इति श्रुतेः इत्युपक्रम्य, यद्यप्यवदानस्तुतिरूपं वाक्यं, तथापि नासता स्तुतिरुपपद्यते' इति द्रमिडभाष्ये उक्तमिति वेदार्थसंग्रहे कीर्तितम्। (वे-सं-पु-२७८.)

(१४) 'देवतासायुज्यादशरीरस्यापि देवतावत् सर्वार्थसिद्धिस्स्यात्' इति वाक्यं रामानुजभाष्ये उक्तम्। (श्रीभा-पु-७९)

(१५) 'आहारशुद्धौ सत्वशुद्धिः सत्वशद्धौ ध्रुवा स्मृतिः' 'शान्त उपासीत' 'सदा तद्भावभावितः' 'क्रियावानेष ब्रह्मविदां वरिष्ठः' 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' 'सत्येन लभ्यः' 'तेषामेवैष विरजो ब्रह्मलोकः' 'नायमात्मा बलहीनेन लभ्यः' 'शान्तो दान्तः' इति निर्वचनानि द्रमिडभाष्योक्तानीति रामानुजभाष्ये उक्तम्। (श्रीभा-पु-११-१२) इमानि निर्वचनानि द्रविडाचार्योक्तानि वाक्यकारोक्तानि वेति सुदर्शनवेङ्कटनाथयोर्विप्रतिपत्तिः।

(१६) 'गहने हीयं सन्निविष्टा' इति वाक्यं श्रुतप्रकाशिकोक्तम्। (श्रीभा-श्रुत-पु-४)

(१७) 'नमः प्रवरगुणैकास्पदाय स्थिरत्रसकुलबीजकुंभभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे नमो जैमिनये वेदरहस्यसंपुटनिगूढविष्फारयित्रे न्यायप्रज्वलितचेतसे नमोऽस्त्वाचार्येभ्यः' इति वाक्यं श्रुतप्रकाशिकायां तत्वटीकायां चोक्तम्। (श्रीभा-श्रुत-पु-४.)* नेदं द्रविडाचार्यस्य, अपि तु मीमांसान्यायकोशकारस्येति अस्माभिः निर्णीतम्।

आहत्य सप्तदशवाक्यानि, तत्र षड्वाक्यानि अद्वैतग्रन्थेषु, एकादशवाक्यानि विशिष्टाद्वैतग्रन्थेषु च उदाहृतानि।

अभनवद्द्रविडाचार्योक्तरीत्या भगवत्पादभाष्ये समन्वयाधिकरणावसानोक्तश्लोकत्रयमेलने विंशतिवाक्यानीति बोध्यम्।

---

*तिरुमलै तिरुपति देवस्थानमुद्रणालये (१९५३) वर्षे मुद्रितवेदार्थसंग्रहपुस्तकपुटसंख्या: मुंबयी निर्णयसागर मुद्रणालये (१९१४) वर्षेमुद्रित श्रीभाष्यपुटसंख्या, तत्रैव (१९१६) वर्षे मुद्रितश्रुतप्रकाशिकासहितश्रीभाष्यपुटसंख्या च दत्ता॥

॥ श्रीः ॥

# अनुबन्धः (३)

## आत्रेयब्रह्मनन्दिवाक्यस्य अत्रिकुलप्रसूतभगवत्पादवाक्यस्य च सामरस्यम् ।

| ब्रह्मनन्दिवाक्यम् । | भगवत्पादवाक्यम् । |
| --- | --- |
| १. 'स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्' इत्यन्तरादित्यविद्याविवरणस्थलीयम् । | १. 'स्यात् परमेश्वरस्यापि इच्छावशात् मायामयं रूपं साधकानुग्रहार्थम्' इति अन्तस्तद्धर्माधिकरणे तत्रैव विद्यायाम् । |
| २. 'हिरण्मय इति रूपसामान्याच्चन्द्रमुखवत्' इति तत्रैव । | २. 'हिरण्मय इव हिरण्मयः । न हि सुवर्णविकारत्वं देवस्य संभवति ....अतो लुप्तोपम एव हिरण्मयशब्दः ज्योतिर्मय इत्यर्थः' इति छान्दोग्यभाष्ये । |
| ३. 'सकृत्प्रत्ययं कुर्यात् शब्दार्थस्य कृतत्वात् प्रयाजादिवत्' इति पूर्वपक्षवाक्यम् । | ३. 'सकृत् प्रत्ययस्स्यात् प्रयाजादिवत् तावता शास्त्रार्थस्य कृतत्वात्' इति आवृत्त्यधिकरणभाष्ये पूर्वपक्षवाक्यम् । |
| ४. 'वेदनमुपासनं स्यात्तद्विषये श्रवणात्' 'सिद्धं तूपासनशब्दात्' इति सिद्धान्तवाक्यम् । | ४. 'विद्युपास्त्योश्च वेदान्तेष्वव्यतिरेकेण प्रयोगो दृश्यते.............. तस्मात् सकृदुपदेशेष्वपि आवृत्तिसिद्धिः' इति सिद्धान्तवाक्यम् । |
| ५. 'उपनिषण्णत्वाद्वोपनिषत्' | ५. 'उपनिषण्णं वा अस्यां परं श्रेय इत्युपनिषत्' इति तैत्तिरीयभाष्यम् । |

॥ श्रीः ॥

# अनुबन्धः (४)

## द्रविडाचार्यवाक्यस्य द्रविडदेशसंभूतभगवत्पादवाक्यस्य च सामरस्यम् ।

| द्रविडाचार्यवाक्यम् । | भगवत्पादवाक्यम् । |
| --- | --- |
| १. 'अञ्जसैव विश्वसृजो रूपं तत्तु न चक्षुषा ग्राह्यं मनसा त्वकलुषेण साधनान्तरवता गृह्यते' इत्यन्तरादित्यविद्याविवरणस्थलीयम् । | १. 'दृश्यते निवृत्तचक्षुर्भिस्समाहितचेतोभिः ब्रह्मचर्यादिसाधनापेक्षम् । इति छान्दोग्यभाष्ये तत्रैव विद्यायाम् । |
| २. 'न ह्यरूपाया देवताया रूपमुपदिश्यते । यथाभूतवादि हि शास्त्रम्' इत्युपास्यदेवतारूपादेर्यथाभूतत्वप्रतिपादकं वाक्यमन्तरादित्यविद्याविवरणस्थलीयम् । | २. 'न चोपासनार्थश्रुतशब्दोत्थविज्ञानविषयस्यायथार्थत्वे प्रमाणमस्ति । ..................तस्मात् यथाभूतानेवात्मेश्वरदेवतादीन् ग्राहयत्युपासनार्थं शास्त्रम् ।' 'तथा परमात्मेश्वरदेवतादि वस्तु........अलौकिकत्वात् तथाभूतमेव भवितुमर्हति' इति बृहदारण्यकभाष्ये । 'ध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिद्ध्यति' इति व्यतिहाराधिकरणे । 'सगुणविद्याविपाकावस्थानं त्वेतत् स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते' इति 'स्वाप्ययसंपत्त्यो'रित्यादिसूत्रभाष्ये च उपास्यदेवतारूपलोकादेः यथाभूतत्वप्रतिपादकम् । |
| ३. 'न मयडत्र विकारमादाय प्रयुज्यते अनारभ्यत्वादात्मनः' इत्यन्तरादित्यविद्याविवरणस्थलीयम् । | ३. 'न हि सुवर्णविकारत्वं देवस्य संभवति' इति छान्दोग्यभाष्ये तत्रैव । |

॥ श्रीः ॥

# अनुबन्धः (५)

## द्रविडात्रेयदर्शने उदाहृतग्रन्थसूची ।

१. बृहदारण्यकोपनिषद्भाष्यम्
२. माण्डूक्योपनिषद्भाष्यम्
३. छान्दोग्योपनिषद्भाष्यम्
४. ब्रह्मसूत्रभाष्यम्
५. तैत्तिरीयोपनिषद्भाष्यम्
६. तदीयानन्दगिरिटीकाः
७. बृहदारण्यकवार्तिकम्
८. तदीयानन्दगिरिटीका
९. श्रुतिसारसमुद्धरणम् ।
१०. तदीयटीका
११. नैष्कर्म्यसिद्धिः
१२. उज्ज्वला
१३. ज्ञानवासिष्ठटीका
१४. इष्टसिद्धिः
१५. इष्टसिद्धिविवरणम्
१६. पञ्चपादिका
१७. पञ्चपादिकाविवरणम्
१८. तत्त्वदीपनम्
१९. ऋजुविवरणम्
२०. खण्डनव्याख्या विद्यासागरी
२१. अद्वैतसिद्धिः ।
२२. लघुचन्द्रिका
२३. अद्वैतरत्नरक्षणम्
२४. कात्यायनवार्तिकम्
२५. ब्रह्मनन्दिवाक्यम्
२६. द्रविडाचार्यभाष्यम्
२७. संक्षेपशारीरकम् ।
२८. तदीयटीकाः मधुसूदन-नृसिम्हाश्रम-रामतीर्थकृताः
२९. कल्पतरुः
३०. परिमलः
३१. न्यायरक्षामणिः
३२. भामती
३३. आनन्दलहरी
३४. तद्व्याख्या चन्द्रिका
३५. तत्त्वचन्द्रिका
३६. सिद्धान्तसिद्धाञ्जनम्
३७. ब्रह्मविद्याभरणम्
३८. उपवर्षवृत्तिः
३९. बोधायनसूत्रम्
४०. शिवतत्त्वविवेकः
४१. पूर्वमीमांसासूत्रम्

४२. ब्रह्मसूत्रम्
४३. शारीरकमीमांसाभाष्यवार्तिकम्
४४. तद्विवरणम्
४५. न्यायवार्तिकतात्पर्यटीका
४६. तात्पर्यपरिशुद्धिप्रकाशः
४७. भास्करभाष्यम्
४८. श्रीकण्ठभाष्यम्
४९. शिवार्कमणिदीपिका
५०. निंबार्कभाष्यम्
५१. शुद्धाद्वैतमार्तण्डः
५२. वल्लभभाष्यप्रकाशः
५३. श्रुतिसूक्तिमाला
५४. शाबरभाष्यम्
५५. तन्त्रवार्तिकम्
५६. सर्वदर्शनसंग्रहः
५७. माधवीयशङ्करविजयः
५८. रामायणम्
५९. सुचरितमिश्रकाशिका
६०. मीमांसान्यायकोशः
६१. चिन्तामणिकृतोपन्यासः
६२. अवन्तिसुन्दरीकथा
६३. कथासरित्सागरः
६४. बृहत्कथामञ्जरी
६५. हरचरितचिन्तामणिः
६६. मणिमेखला द्राविडप्रबन्धः
६७. डाक्टर् कृष्णस्वाम्यय्यङ्गार् सर्वकलाशालाप्रसङ्गः
६८. प्रपञ्चहृदयम्
६९. नयमयूखमालिका
७०. अनुव्याख्यानम्
७१. तत्त्वप्रकाशिका
७२. रामानुजभाष्यम्
७३. श्रुतप्रकाशिका
७४. श्रुतप्रदीपिका
७५. तत्वटीका
७६. नयप्रकाशिका
७७. मूलभावप्रकाशिका
७८. वेदार्थसंग्रहः
७९. तात्पर्यदीपिका
८०. वेदान्तसारः
८१. वेदान्तदीपः
८२. रामानुजगीताभाष्यम्
८३. तात्पर्यचन्द्रिका
८४. गीतार्थसंग्रहरक्षा
८५. आगमप्रामाण्यम्
८६. रङ्गरामानुजीयछान्दोग्यभाष्यम्
८७. सेश्वरमीमांसा
८८. पाराशर्यविजयः

८९. ऐकशास्त्र्यमीमांसा
९०. श्रीभाष्यमणिप्रवालदीपिका
९१. न्यायपरिशुद्धिः
९२. तत्वमुक्ताकलापः
९३. सर्वार्थसिद्धिः
९४. आत्मसिद्धिः
९५. सिद्धित्रयटिप्पणी
९६. यतिराजसप्ततिः
९७. संकल्पसूर्योदयः
९८. विश्वगुणादर्शः
९९. मीमांसापादुका
१००. मीमांसापादुकापरित्राणम्
१०१. रामानुजभाष्यटिप्पणी
१०२. मानमेयरहस्यश्लोकवार्तिकम् ।
१०३. मैसूर्महाराजसंस्कृतमहापाठशालापत्रिका
१०४. यामुनस्तोत्रभाष्यम्
१०५. यामुनस्तोत्रम्
१०६. यतीन्द्रमतदीपिका
१०७. तत्वरत्नाकरः
१०८. अधिकरणसारावली
१०९. न्यायसिद्धाञ्जनम्
११०. सच्चरित्ररक्षा
१११. शतदूषणी
११२. निक्षेपरक्षा
११३. श्रुतप्रकाशिकाभावप्रकाशिका
११४. संप्रदायपरिशुद्धिः
११५. शाङ्करगीताभाष्यं सटीकम्
११६. सूतसंहिताव्याख्या

अन्येपि केचन ग्रन्थाः ।

---

अनुबन्धः (६)

# शुद्धपाठसूची

ब्रह्मसूत्रार्थ (पु. २१. प. ३.)

वर्धयेत् तं तत् (पु.-६०. प. ७.)

॥ श्रीः ॥

# श्री नटेशनवरत्नमालिका

प्रपन्नजनसन्दोहप्रत्यूहध्वान्तपूषणम् ।
अमृतांशुकलाचूडं कुञ्जरास्यमुपास्महे ॥ १ ॥

नृत्तं त्वदीयमवलोक्य नटेश पूर्वमानन्दतुन्दिलहृदो मुनयो बभूवुः ।
तद्दर्शयाद्य मम मोदमुपैमि चाहं निष्पक्षपात भवतस्सम एव सर्वः ॥ २ ॥

नन्दादयोऽपि नटराज पुराऽलभन्त भक्त्या पदांवुजयुगे तव बन्धमोक्षम् ।
देयाऽद्य सा न किमु मे करुणांबुराशे को वा मया व्यरचि तं वद तेऽपराधः ॥ ३ ॥

कस्मान्नटेश कुरुषे न कृपां मयि त्वं किं वा त्वया न विदितो मम दीनभावः ।
जानाति नो यदि भवान्मम दीनतां तच्छ्रुत्युक्तमीश वितथं किमु सर्ववित्त्वम् ॥ ४ ॥

संसृत्युदन्वति नटेश सदाऽप्यगाधे मग्नं न मां चिरमुदासितुमर्हसि त्वम् ।
यद्यप्यहं तव चकार बहून् हि मन्तून् शंभो तथापि नहि तान् गणयान्तरङ्गे ॥ ५ ॥

दुःखाम्बुधौ पतितमीश समुद्धरैनं नो चेच्छरण्य न हि मे क्षतिरस्ति काऽपि ।
भूयान्निमज्जनमकीर्तिपयोनिधौ ते सर्वेश्वरस्य भवतो नहि युक्तमेतत् ॥ ६ ॥

पादांवुजातयुगलं तव यो भजेत हन्ताधिरोहति हि तस्य ललाटमंघ्रिः ।
वक्षस्स्थलं विषधरा विषमुत्तमाङ्गं कण्ठं च पार्श्वभुवमस्य पिशाचवर्गः ॥ ७ ॥

त्वामामनन्ति नटनाथ पदाब्जभाजां सर्वार्थदायिनमहो निखिलाश्च वेदाः ।
त्वं चोरयस्यहह शोकमशेषमेषामन्यादृशी विलसतीश वदान्यता ते ॥ ८ ॥

सर्वेश्वरोऽपि नटराज दिगंबरस्त्वं वाहो वृषस्तव गिरौ शयनं पिशाचाः ।
मित्राणि भूषणमहो भुजगाश्च भस्म भिक्षामटस्यपि च नृत्यसि नित्यमेव ॥ ९ ॥

तातो भवान्मम तनूभव एष तेऽहं सर्वेश्वरोऽस्यहमपीश नितान्तदीनः ।
एतादृशं न किल मां परिरक्षसि त्वं प्रेमात्मजेष्वसदृशं भवतो विभाति ॥ १० ॥

श्रीमन्नटेशचरणाब्जसमर्प्यमाणां श्रीरामशर्मकलितां नवरत्नमालाम् ।
सन्तो विलोक्य परिहृत्य समस्तदोषान् गृह्णन्तु पूर्णकृपया गुणमल्पमेव ॥ ११ ॥

---

प्राप्तिस्थानम् :—

(1) कामकोटि कोशस्थानम्
परान्सिस् जोसफ् स्ट्रीट्, मद्रास् ।

(2) ग्रन्थकर्ता: मद्रास् संस्कृतकालेज्
मैलाप्पूर् ।

*Copies can be had of :*

1. **Sri Kamakoti Kosasthanan**
   Francis Joseph Street, Madras-1.

2. The Author, **Madras Sanskrit College,**
   Mylapore, Madras, 4.

भारती विजयम प्रेस्, तिरुवल्लिकेणि, मद्रास्—५.